# पञ्चविंशोऽध्यायः

## यदुवंशकीर्त्तनेकृष्णतपश्चरणवर्णनम्

सूत उवाच

अथदेवो हृषीकेशो भगवान्पुरुषोत्तमः । ततापघोरं पुत्रार्थं निधानं तपसस्तपः ॥ १

स्वेच्छयाऽप्यवतीर्णोऽसौ कृतकृत्योऽपि विश्वसृक् ।

चचार स्वात्मनो मूलं बोधयन्परमेश्वरम् ॥ २ ॥

जगाम योगिभिर्जुष्टं नानापक्षिसमाकुलम् । आश्रमंतूपमन्योर्वैमुनीन्द्रस्यमहात्मनः

पतत्त्रिराजमारूढः सुपर्णमतितेजसम् । शङ्खचक्रगदापाणिः श्रीवत्साङ्कितलक्षणः

नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् । ऋषीणामाश्रमैर्जुष्टं वेदघोषनिनादितम्

सिंहर्क्षशरभाकीर्णं शार्दूलगजसंयुतम् । विमलस्वादुपानीयैः सरोभिरुपशोभितम् ।

आरामैर्विविधैर्जुष्टं देवतायतनैः शुभैः । ऋषिभिर्ऋषिपुत्रैश्च महामुनिगणैस्तथा ।

वेदाध्ययनसम्पन्नैः सेवितश्चाग्निहोत्रिभिः ।

योगिभिर्ध्याननिरतैर्नासाग्रन्यस्तलोचनैः ॥ ८ ॥

उपेतं सर्वतः पुण्यं ज्ञानिभिस्तत्त्वदर्शिभिः । नदीभिरभितोजुष्टं जापकैर्ब्रह्मवादिभिः

सेवितं तापसैः पुण्यैरीशाराधनतत्परैः । प्रशान्तैः सत्यसङ्कल्पैर्निःशोकैर्निरुपद्रवैः

भस्मावदातसर्वाङ्गैःरुद्रजाप्यपरायणैः । मुण्डितैर्जटिलैः शुद्धैस्तथान्यैश्च शिखालैः

सेवितं तापसैर्नित्यं ज्ञानिभिर्ब्रह्मवादिभिः । तत्राऽऽश्रमवरेरम्ये सिद्धाश्रमविभूषि

गङ्गा भगवती नित्यं वहत्येवाऽघनाशिनी ।

स तत्र वीक्ष्य विश्वात्मा तापसान्वीतकल्मषान् ॥ १३ ॥

प्रणामेनाथवचसा पूजयामास माधवः । तं ते दृष्ट्वा जगद्योनिं शङ्खचक्रगदाधरम्

प्रणेमुर्भक्तिसंयुक्ता योगिनां परमं गुरुम् । स्तुवन्तिवैदिकैर्मन्त्रैःकृत्वाहृदिसनातनं

प्रोचुरन्योन्यमव्यक्तमादिदेवं महामुनिम् । अयं स भगवानेकः साक्षीनारायणः ।

आगच्छत्यधुना देवः प्रधानपुरुषः स्वयम्। अयमेवाव्ययः स्रष्टा संहर्ता चैव रक्षकः
अमूर्तो मूर्तिमान् भूत्वा मुनीन्द्रष्टुमिहागतः।
एष धाता विधाता च समागच्छति सर्वगः ॥ १८ ॥
अनादिरक्षयोऽनन्तो महाभूतो महेश्वरः।
श्रुत्वा श्रुत्वा हरिस्तेषां वचांसि वचनातिगः ॥ १९ ॥
ययौ स तूर्णं गोविन्दः स्थानं तस्य महात्मनः। उपस्पृश्याथ भावेन तीर्थे तीर्थे स यादवः
चकार देवकीसूनुर्देवर्षिपितृतर्पणम्। नदीनां तीरसंस्थाने स्थापितानि मुनीश्वरैः
लिङ्गानि पूजयामास शम्भोरमिततेजसः। दृष्ट्वा दृष्ट्वा समायान्तं यत्र यत्र जनार्दनम्
पूजयाञ्चक्रिरे पुष्पैरक्षतैस्तन्निवासिनः। समीक्ष्य वासुदेवं तं शार्ङ्गशङ्खासिधारिणम्
तस्थिरे निश्चलाः सर्वे शुभाङ्गं तन्निवासिनः। यानि तत्राश्रमस्थानि मानसानि जनार्दनम्
दृष्ट्वा समाहितान्यासन्निश्चलान्यग्निपुरोगमम्। अथावगाह्य गङ्गायां कृत्वा देवर्षितर्पणम्
आदाय पुष्पवर्याणि मुनीन्द्रस्याविशद् गृहम्।
दृष्ट्वा तं योगिनां श्रेष्ठं भस्मोद्धूलितविग्रहम् ॥ २९ ॥
जटाचीरधरं शान्तं ननाम शिरसा मुनिम्। आलोक्य कृष्णमायान्तं पूजयामास तत्त्ववित्
आसने वासयामास योगिनां प्रथमातिथिम्। उवाच वचसा योनिं ज्ञानानां परमं पदम्
विष्णुमव्यक्तसंस्थानं शिष्यभावेन संस्थितम्। स्वागतं ते हृषीकेश सफलानि तपांसि नः
यत्साक्षादेव विश्वात्मा मद्गेहं विष्णुरागतः। त्वां न पश्यन्ति मुनयो यतन्तोऽपीह योगिनः
तादृशस्याथ भवतः किमागमनकारणम्। श्रुत्वोपमन्योस्तद्वाक्यं भगवान्देवकीसुतः
व्याजहार महायोगी प्रसन्नः प्रणिपत्य तम् ॥ ३१ ॥

कृष्ण उवाच

भगवन्द्रष्टुमिच्छामि गिरीशं कृत्तिवाससम् ॥ ३२ ॥
सम्प्राप्तो भवतः स्थानं भगवद्दर्शनोत्सुकः। कथं स भगवानीशो दृश्यो योगविदां वरः
मयाचिरेण कुत्राहं द्रक्ष्यामि तमुमापतिम्। इत्याह भगवानुक्तो दृश्यते परमेश्वरः
भक्त्या चोग्रेण तपसा तत्कुरुष्वेह सुव्रत। इहेश्वरं देवदेवं मुनीन्द्रा ब्रह्मवादिनः ॥ ३०

ध्यायन्त्याराधयन्त्येनंयोगिनस्तापसाश्च ये । इहदेवःसपत्नीको भगवान्वृषभध्वजः
क्रीडते विविधैर्भूतैर्योगिभिः परिवारितः । इहाश्रमे पुरारुद्रं तपस्तप्त्वा सुदारुणम्
लेभे महेश्वराद्योगं वसिष्ठो भगवानृषिः । इहैव भगवान्व्यासःकृष्णद्वैपायनःस्वयम्
दृष्ट्वा तं परमेशानं लब्धवान्ज्ञानमैश्वरम् । इहाश्रमपदे रम्ये तपस्तप्त्वा कपर्द्दिनः ॥
अविन्दन्पुत्रकान्रुद्रात्सूरयो भक्तिसंयुताः । इह देवा महादेवीं भवानीञ्च महेश्वरीम्
संस्तुवन्तो महादेवंनिर्भया निर्वृतिययुः । इहाराध्य महादेवं सावर्णिस्तपताम्वरः
लब्धवान्परमं योगं ग्रन्थकारत्वमुत्तमम् । प्रवर्त्तयामाससतांकृत्वावै संहितांशुभाम्

इहैव संहितां दृष्ट्वा कामो यः शशिपायिनः ।
महादेवश्चकारेमां पौराणीं तन्नियोगतः ॥

द्वादशैव सहस्राणि श्लोकानांपुरुषोत्तम !। इह प्रवर्त्तिता पुण्याह्यष्टसाहस्त्रिकोत्तरा
(वायवीयोत्तरंनामपुराणं वेदसम्मतम् )। द्विजःपौराणिकींपुण्यां प्रसादेनद्विजोत्तमैः
( इहैव ख्यापितं शिष्यैर्वैशम्पायनभाषितम् ॥ ४३ ॥

याज्ञवल्क्यं महायोगी दृष्ट्वाऽत्रतपसा हरम् । चकारतन्नियोगेन योगशास्त्रमनुत्तमम्
इहैव भृगुणा पूर्वं तप्त्वा पूर्वं महातपः । शुक्रो महेश्वरात्पुत्रोलब्धो योगविदाम्वरः
तस्मादिहैव देवेश तपस्तप्त्वा सुदुश्चरम् । द्रष्टुमर्हसि विश्वेशमुग्रम्भीमंकपर्द्दिनम्
एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः । व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्म्मणे
स तेन मुनिवर्येण व्याहृतो मधुसूदनः । तत्रैव तपसा देवं रुद्रमाराधयत्प्रभुः ॥ ४८ ॥
भस्मोद्धूलितसर्वाङ्गोमुण्डो वल्कलसंयुतः । जजाप रुद्रमनिशं शिवैकाहितमानसः
ततो बहुतिथे काले सोमः सोमार्द्धभूषणः । अदृश्यत महादेवो व्योम्निदेव्यामहेश्वरः

किरीटिनं गदिनञ्चित्रमालं पिनाकिनं शूलिनं देवदेवम् ।
शार्दूलचर्माम्बरसम्वृताङ्गं देव्या महादेवमसौ ददर्श ॥ ५१ ॥
प्रभुम्पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम् ।
अणोरणीयांसमनन्तशक्तिं प्राणेश्वरं शम्भुमसौ ददर्श ॥ ५२ ॥
परश्वधासक्तकरं त्रिनेत्रं नृसिंहचर्मावृतभस्मगात्रम् ।

समुद्गिरन्तं प्रणवं बृहन्तं सहस्रसूर्य्यप्रतिमं ददर्श ॥ ५३ ॥
न यस्य देवा न पितामहोऽपि नेन्द्रो न चाग्निर्वरुणो न मृत्युः ।
प्रभावमद्यापि वदन्ति रुद्रं तमादिदेवं पुरतो ददर्श ॥ ५४ ॥
तदान्वपश्यद्गिरिशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् ।
स्तुवन्तमीशं बहुभिर्वचोभिः शङ्खासिचक्रार्पितहस्तमाद्यम् ॥ ५५ ॥
कृताञ्जलिं दक्षिणतः सुरेशं हंसाधिरूढं पुरुषं ददर्श ।
स्तुवानमीशस्य परं प्रभावं पितामहं लोकगुरुं दिविस्थम् ॥ ५६ ॥
गणेश्वरानर्कसहस्रकल्पान्नन्दीश्वरादीनमितप्रभावान् ।
त्रिलोकभर्तुः पुरतोऽन्वपश्यत्कुमारमग्निप्रतिमं गणेशम् ॥ ५७ ॥
मरीचिमत्रिं पुलहं पुलस्त्यं प्रचेतसं दक्षमथापि कण्वम् ।
पराशरं तत्परतो वसिष्ठं स्वायम्भुवञ्चापि मनुं ददर्श ॥ ५८ ॥
तुष्टाव मन्त्रैरमरप्रधानं बद्धाञ्जलिर्विष्णुरुदारबुद्धिः ।
प्रणम्य देव्या गिरिशं सभक्त्या स्वात्मन्यथात्मानमसौ विचिन्त्य ॥

कृष्ण उवाच

नमोऽस्तु ते शाश्वत सर्वयोने ब्रह्माधिपं त्वामृषयो वदन्ति ।
तपश्च सत्त्वञ्च रजस्तमश्च त्वामेव सर्वं प्रवदन्ति सन्तः ॥ ६० ॥
त्वं ब्रह्मा हरिरथ रुद्र विश्वकर्ता संहर्ता दिनकरमण्डलाधिवासः ।
प्राणस्त्वं हुतवहवासवादिभेदस्त्वामेकं शरणमुपैमि देवमीशम् ॥ ६१ ॥
साङ्ख्यास्त्वामगुणमथाहुरेकरूपं योगास्त्वं सततमुपासते हृदिस्थम् ।
वेदास्त्वामभिदधतीह रुद्रमीड्यं त्वामेकं शरणमुपैमि देवमीशम् ॥ ६२ ॥
त्वत्पादे कुसुममथापि पत्रमेकं दत्त्वाऽसौ भवति विमुक्तविश्वबन्धः ।
सर्वाघं प्रणुदति सिद्धयोगिजुष्टं स्मृत्वा ते पदयुगलं भवत्प्रसादात् ॥ ६३ ॥
यस्याशेषविभागहीनममलं हृद्यन्तरावस्थितं ।
न त्वां योनिमनन्तमेकमचलं सत्यम्परं सर्वगम् ॥ ६४ ॥

स्थालम्प्राहुरनादिमध्यनिधनं यस्मादिदञ्जायते

नित्यं त्वाहमुपैमि सत्यविभवं विश्वेश्वरंतं शिवम् ॥ ६५ ॥

ॐनमो नीलकण्ठाय त्रिनेत्राय च रंहसे । महादेवाय ते नित्यमीशानाय नमो नमः

नमः पिनाकिने तुभ्यं नमो मुण्डाय दण्डिने । नमस्तेवज्रहस्तायदिग्वस्त्रायकपर्द्दिने

नमोभैरवनादाय कालरूपाय दंष्ट्रिणे । नागयज्ञोपवीताय नमस्ते वह्निरेतसे ॥ ६८॥

नमोऽस्तु ते गिरीशाय स्वाहाकाराय ते नमः ।

नमो मुक्ताट्टहासाय भीमाय च नमोनमः ॥ ६६ ॥

नमस्ते कामनाशाय नमः कालप्रमाथिने । नमो भैरववेषाय हराय च निषङ्गिणे ॥

नमोऽस्तु ते त्र्यम्बकाय नमस्ते कृत्तिवाससे ।

नमोऽम्बिकाधिपतये पशूनां पतये नमः ॥ ७१ ॥

नमस्ते व्योमरूपाय व्योमाधिपतये नमः । नरनारीशरीराय साङ्ख्ययोगप्रवर्त्तिने ॥

नमोभैरवनाथाय देवानुगतलिङ्गिने । कुमारगुरवे तुभ्यं देवदेवाय ते नमः ॥ ७३ ॥

नमो यज्ञाधिपतये नमस्ते ब्रह्मचारिणे । मृगव्याधाय महते ब्रह्माधिपतये नमः ॥

नमो हंसाय विश्वाय मोहनाय नमोनमः । योगिनेयोगगम्याय योगमायाय ते नमः

नमस्ते प्राणपालाय घण्टानादप्रियाय च । कपालिनेनमस्तुभ्यं ज्योतिषां पतयेनमः

नमो नमोऽस्तु ते तुभ्यं भूय एव नमो नमः ।

मह्यं सर्व्वात्मना कामान् प्रयच्छ परमेश्वर ॥ ७७ ॥

सूत उवाच

एवं हि भक्त्या देवेशमभिष्टूय स माधवः । पपातपादयोर्विप्रादेवदेव्योःसदण्डवत्

उत्थाप्य भगवान् सोमः कृष्णं केशिनिषूदनम् ।

बभाषे मधुरं वाक्यं मेघगम्भीरनिःस्वनः ॥ ७६ ॥

किमर्थं पुण्डरीकाक्ष! तप्यते भवतातपः । त्वमेव दाता सर्वेषांकामानांकर्मणामिह

त्वं हि सा परमा मूर्त्तिर्मम नारायणाह्वया । न विना त्वां जगत्सर्वंविद्यतेपुरुषोत्तम

वेत्थनारायणानन्तमात्मानं परमेश्वरम् । महादेवं महायोगं स्वेन योगेन केशव ॥

श्रुत्वा तद्वचनं कृष्णः प्रहसन्वै वृषध्वजम् ।
उवाचालोक्य विश्वेशो देवीं च हिमशैलजाम् ॥ ८३ ॥
ज्ञातं हि भवता सर्वं स्वेन योगेन शङ्कर । इच्छाम्यात्मसमं पुत्रं त्वद्भक्तं देहि शङ्कर ॥
तथास्त्वित्याह विश्वात्मा प्रहृष्टमनसा हरः । देवीमालोक्य गिरिजां केशवं परिषस्वजे ॥
ततः सा जगतां माता शङ्करार्द्धशरीरिणी ।
व्याजहार हृषीकेशं देवी हिमगिरीन्द्रजा ॥ ८५ ॥
वत्स ज्ञातं मयाऽनन्त निश्चला सर्वदाऽच्युत । अनन्या ईश्वरे भक्तिरात्मन्यपि च केशव ॥
त्वं हि नारायणः साक्षात्सर्वात्मा पुरुषोत्तमः ।
प्रार्थितो दैवतैः पूर्वं सञ्जातो देवकीसुतः ॥ ८८ ॥
पश्य त्वमात्मनात्मानमात्मानमम सम्भवम् । नावयोर्विद्यते भेद एकं पश्यन्ति सूरयः ॥
इमानि च वरानिष्टान्मत्तो गृह्णीष्व केशव । सर्वज्ञत्वं तथैश्वर्यं ज्ञानं तत्पारमेश्वरम् ॥
ईश्वरे निश्चलां भक्तिमात्मन्यपि परं बलम् । एवमुक्तस्तया कृष्णो महादेव्या जनार्दनः ॥
आदेशं शिरसा गृह्य देवोऽप्याह महेश्वरम् ।
प्रगृह्य कृष्णं भगवानथेशः करेण देव्या सह देवदेवः ॥
सम्पूज्यमानो मुनिभिः सुरेशैर्जगाम कैलासगिरिं गिरीशः ॥ ९२ ॥
इति श्रीकूर्ममहापुराणे यदुवंशानुकीर्तने कृष्णतपश्चरणं नाम
पञ्चविंशोऽध्यायः ॥ २५ ॥

# षड्विंशोऽध्यायः

## लिङ्गोत्पत्तिवर्णनम्

सूत उवाच

प्रविश्य मेरुशिखरं कैलासं कनकप्रभम्। रराम भगवान्सोमः केशवेन महेश्वरः॥
अपश्यंस्तेमहात्मानं कैलासगिरिवासिनः। पूजयाञ्चक्रिरे कृष्णं देवदेवमिवाच्युतम्
चतुर्बाहुमुदाराङ्गं कालमेघसमप्रभम्। किरीटिनं शार्ङ्गपाणिं श्रीवत्साङ्कितवक्षसम्
दीर्घबाहुं विशालाक्षं पीतवाससमच्युतम्। दधानमुरसा मालां वैजयन्तीमनुत्तमाम्
भ्राजमानं श्रियादिव्यायुवानमतिकोमलम्। पद्माङ्घ्रिं पद्मनयनं सस्मितंसद्गतिप्रदम्
कदाचित्तत्र लीलार्थं देवकीनन्दवर्द्धनः। भ्राजमानःश्रियाकृष्णश्चचार गिरिकन्दरम्

गन्धर्वाप्सरसां मुख्या नागकन्याश्च कृत्स्नशः।
सिद्धा यक्षाश्च गन्धर्वा देवास्तत्र जगन्मयम्॥ ७॥

दृष्ट्वाऽऽश्चर्यम्परंगत्वा हर्षादुत्फुल्ललोचनाः। मुमुचुःपुष्पवर्षाणितस्यमूर्ध्निमहात्मनः
गन्धर्वकन्यकादिव्यास्तद्वदप्सरसोवराः। दृष्ट्वा चकमिरे कृष्णं सुस्तुतंशुचिभूषणाः
काश्चिद्गायन्तिविविधंगानंगीतविशारदाः। सम्प्रेक्ष्यदेवकीसूनुंसुन्दरं काममोहिताः

काश्चिद्विलासबहुला नृत्यन्ति स्म तदग्रतः।
सम्प्रेक्ष्य सस्मितं काश्चित्पपुस्तद्वनामृतम्॥ ११॥
काश्चिद्भूषणवर्याणि स्वाङ्गादादाय सादरम्।
भूषयाञ्चक्रिरे कृष्णं कन्या लोकविभूषणम्॥ १२॥

काश्चिद्भूषणवर्याणिसमादायतदङ्गतः। स्वात्मानंभूषयामासुःस्वात्मकैरपिमाधवम्
काचिदागत्य कृष्णस्य समीपं काममोहिता। चुचुम्ब वदनाम्भोजं हरेर्मुग्धमृगेक्षणा
प्रगृह्य काचिद्गोविन्दंकरेणभवनंस्वकम्। प्रापयामास लोकादिमायया तस्यमोहिता

तासां स भगवान् कृष्णः कामान् कमललोचनः।

बहूनि कृत्वा रूपाणि पूरयामास लीलया ॥ १६ ॥
एव वै सुचिरं कालंदेवदेवपुरे हरिः । रेमे नारायणः श्रीमान्मायया मोहयञ्जगत्
गते बहुतिथे काले द्वारवत्या निवासिनः । बभूवुर्विह्वला भीता गोविन्दविरहे जना
ततः सुपर्णो बलवान्पूर्वमेव विसर्जितः ।
स कृष्णं मार्गमाणस्तु हिमवन्तं ययौ गिरिम् ॥ १८ ॥
अदृष्ट्वा तत्र गोविन्दं प्रणम्य शिरसा मुनिम् । आजगामोपमन्युं तत्पुरीं द्वारवतीं पुन
तदन्तरे महादैत्या राक्षसाश्चातिभीषणा । आजग्मुर्द्वारकां शुभ्रां भीषयन्त सहस्रश
स तान्सुपर्णो बलवान् कृष्णतुल्यपराक्रम । हत्वा युद्धेन महता रक्षति स्म पुरीं शुभाम्
एतस्मिन्नेव काले तु नारदो भगवानृषि । दृष्ट्वा कैलासशिखरे कृष्णं द्वारवतीं गत
तं दृष्ट्वा नारदमृषिं सर्वे तत्र निवासिन । प्रोचुर्नारायणो नाथ कुत्रास्ते भगवान्हरि
स तानुवाच भगवान्कैलासशिखरे हरिः । रमतेऽद्य महायोगी तं दृष्ट्वाहमिहागत
तस्योपश्रुत्य वचनं सुपर्णः पततांवर । जगामाकाशगो विप्रा कैलासगिरिमुत्तमम्
ददर्श देवकीसूनुं भवने रत्नमण्डिते । वरासनस्थं गोविन्दं देवदेवान्तिके हरिम् ॥ २७ ॥
उपास्यमानममरैर्दिव्यस्त्रीभिः समन्ततः । महादेवगणैः सिद्धैर्योगिभिः परिवारितम्
प्रणम्य दण्डवद्भूमौ सुपर्णः शङ्करं शिवम् । निवेदयामास हरेः प्रवृत्तं द्वारकापुरे ॥ २८ ॥
ततः प्रणम्य शिरसा शङ्करं नीललोहितम् । आजगाम पुरीं कृष्णः सोऽनुज्ञातो हरेण तु
आरुह्य कश्यपसुतं स्त्रीगणैरभिपूजितः । वचोभिरमृतास्वादैर्मानितो मधुसूदन ॥ ३१ ॥
वीक्ष्य यान्तममित्रघ्नं गन्धर्वाप्सरसां वरा । अन्वगच्छन्महायोगं शङ्खचक्रगदाधरम्
विसर्जयित्वा विश्वात्मा सर्वा एवाङ्गना हरिः ।
ययौ स तूर्णं गोविन्दो दिव्यां द्वारवतीं पुरीम् ॥ ३३ ॥
गते देवेऽसुररिपौ न कामिन्यो मुनीश्वरा । निशेव चन्द्ररहिता विनानेन चकाशिरे
श्रुत्वा पौरजना स्तूर्णं कृष्णागमनमुत्तमम् । मण्डयाञ्चक्रिरे दिव्यां पुरीं द्वारवतीं शुभाम्
पताकाभिर्विशालाभि ध्वजैरत्नवहि कृते । मार्गदिभि पुरीं रम्यां भूषयाञ्चक्रिरे जना
अवाद्यन्त विविधान्वादित्रान्मधुरस्वनान् ।

शङ्खान् सहस्रशो दध्मुर्वीणावादान्वितेनिरे ॥ ३७ ॥
प्रविष्टमात्रे गोविन्दे पुरींद्वारवतींशुभाम् । अगायन्मधुरंगानं स्त्रियोयौवनशोभिताः
दृष्ट्वा ननृतुरीशानं स्थिताः प्रासादमूर्द्धसु । मुमुचुः पुष्पवर्षाणि वसुदेवसुतोपरि
प्रविश्य भगवान् कृष्णस्त्वाशीर्व्वादाभिवर्द्धितः ।
वरासने महायोगी भाति देवीभिरन्वितः ॥ ४० ॥
सुरम्ये मण्डपे शुभ्रेशङ्खाद्यैःपरिवारितः । आत्मजैरभितोमुख्यैः स्त्रीसहस्रैश्चसम्वृतः
तत्रासनवरे रम्ये जाम्बवत्या सहाच्युतः । ॥ ४१ ॥
भ्राजते चोमया देवो यथा देव्या समन्वितः ॥ ४२ ॥
आजग्मुर्देवगन्धर्वा द्रष्टुं लोकादिमव्ययम । महर्षयः पूर्व्वजातामार्कण्डेयादयोद्विजाः
ततः स भगवान् कृष्णो मार्कण्डेयं समागतम् ।
ननामोत्थाय शिरसा स्वासनञ्च ददौ हरिः ॥ ४४ ॥
सम्पूज्यतानृषिगणान्प्रणामेनसहानुगः । विसर्जयामासहरिर्दत्वा तदभिवाञ्छितान्
तदा मध्याह्नसमये देवदेवः स्वयंहरिः । स्नातः शुक्लाम्बरो भानुमुपतिष्ठनकृताञ्जलिः
जजाप जाप्यं विधिवत्प्रेक्षमाणो दिवाकरम् ।
तर्पयामास देवेशो देवान् पितृगणान्मुनीन् ॥ ४७ ॥
प्रविश्य देवभवनं मार्कण्डेयेन चैव हि । पूजयामास लिङ्गस्थं भूतेशम्भूतिभूषणम्
समाप्य नियमं सर्व्वं नियन्ता स स्वयंनृणाम् ।
भोजयित्वा मुनिवरं ब्राह्मणानभिपूज्य च ॥ ४६ ॥
कृत्वाऽऽत्मयोगं विप्रेन्द्रा! मार्कण्डेयेन चाऽच्युतः ।
कथाम्पौराणिकीं पुण्यां चक्रे पुत्रादिभिर्वृतः ॥ ५० ॥
अथैतत्सर्व्वमखिलं दृष्ट्वा कर्म्म महामुनिः ।
मार्कण्डेयो हसन्कृष्णं बभाषे मधुरं वचः ॥ ५१ ॥

मार्कण्डेय उवाच

कः समाराध्यते देवो भवता कर्म्मभिः शुभैः ।

बहूनि कृत्वा रूपाणि पूरयामास लीलया ॥ १६ ॥
एवं वै सुचिरं कालं देवदेवपुरे हरिः । रेमे नारायणः श्रीमान्मायया मोहयञ्जगत्
गते बहुतिथे काले द्वारवत्यां निवासिनः । बभूवुर्विह्वलाभीता गोविन्दविरहे जनाः
ततः सुपर्णो बलवान्पूर्वमेव विसर्जितः ।
स कृष्णं मार्गमाणस्तु हिमवन्तं ययौ गिरिम् ॥ १८ ॥
अदृष्ट्वा तत्र गोविन्दं प्रणम्य शिरसा मुनिम् । आजगामोपमन्युं तत्पुरीं द्वारवतीं पुनः
तदन्तरे महादैत्या राक्षसाश्चातिभीषणाः । आजग्मुर्द्वारकां शुभ्रां भीषयन्तः सहस्रशः
स तान्सुपर्णो बलवान् कृष्णतुल्यपराक्रमः । हत्वा युद्धेन महता रक्षति स्म पुरीं शुभाम्
एतस्मिन्नेव काले तु नारदो भगवानृषिः । दृष्ट्वा कैलासशिखरे कृष्णं द्वारवतीं गतः
तं दृष्ट्वा नारदमृषिं सर्वे तत्र निवासिनः । प्रोचुर्नारायणो नाथ कुत्रास्ते भगवान्हरिः
स तानुवाच भगवान्कैलासशिखरे हरिः । रमतेऽद्य महायोगी तं दृष्ट्वाहमिहागतः
तस्योपश्रुत्य वचनं सुपर्णः पततां वरः । जगामाकाशगो विप्राः कैलासं गिरिमुत्तमम्
ददर्श देवकीसूनुं भवने रत्नमण्डिते । वरासनस्थं गोविन्दं देवदेवान्तिके हरिम् ॥ २७ ॥
उपास्यमानममरैर्दिव्यस्त्रीभिः समन्ततः । महादेवगणैः सिद्धैर्योगिभिः परिवारितम्
प्रणम्य दण्डवद्भूमौ सुपर्णः शङ्करं शिवम् । निवेदयामास हरिं प्रवृत्तं द्वारकापुरे ॥ २८ ॥
ततः प्रणम्य शिरसा शङ्करं नीललोहितम् । आजगाम पुरीं कृष्णः सोऽनुज्ञातो हरेण तु
आरुह्य कश्यपसुतं स्त्रीगणैरभिपूजितः । वचोभिरमृतास्वादैर्मानितो मधुसूदनः ॥ ३१ ॥
वीक्ष्य यान्तममित्रघ्नं गन्धर्वाप्सरसां वराः । अन्वगच्छन्महायोगं शङ्खचक्रगदाधरम्
विसर्जयित्वा विश्वात्मा सर्वा एवाङ्गना हरिः ।
ययौ स तूर्णं गोविन्दो दिव्यां द्वारवतीं पुरीम् ॥ ३३ ॥
गते देवेऽसुररिपौ न कामिन्यो मुनीश्वराः । निशेव चन्द्ररहिता विनाऽनेन चकाशिरे
श्रुत्वा पौरजनास्तूर्णं कृष्णागमनमुत्तमम् । मण्डयाञ्चक्रिरे दिव्यां पुरीं द्वारवतीं शुभाम्
पताकाभिर्विशालाभिर्ध्वजै रत्नैस्तथाहि हृते । प्राग्विदिभिः पुरीं रम्यां भूषयाञ्चक्रिरे जनाः
अवाद्यन्त विविधान्वादित्रा मधुरस्वनान् ।

एतदाख्याहि मे सर्वं प्रसादाद् द्विजसत्तम !॥ ४ ॥

मार्कण्डेय उवाच

शृणुष्वैकमना भूत्वा तीर्थात्तीर्थान्तरं महत्।
श्रुते यस्य प्रभावे तु मुच्यते वाचिकादघात् ॥ ५ ॥
वाचिकैर्मानसैर्वापि शारीरैश्च विशेषतः।
कीर्त्तनात्तस्य तीर्थस्य मुच्यते सर्वपातकैः ॥ ६ ॥

पञ्चक्रोशप्रमाणं तु तच्च तीर्थंमहीपते !। भुक्तिमुक्तिप्रदंदिव्यंप्राणिनांपापकर्मिणाम्
रेवाया दक्षिणेकूलेपर्वतोभृगुसञ्ज्ञितः। तस्यमूर्ध्नि च तत्तीर्थंस्थापितंचैवशम्भुना
शूलभेदेति विख्यातंत्रिपुलोकेपुभूपते। तत्रस्थिताश्चये वृक्षास्तीर्थाच्चैवचतुर्द्दिशम्
पतितानिलयंयान्ति रुद्रस्यनात्रसंशयः। मृतास्तत्रैवयेकेचिज्जन्तवो भुवि पक्षिणः
ते यान्तिपरमंलोकंतत्रतीर्थेनसंशयः। पातालान्निःसृता गङ्गाभोगवतीतिसञ्ज्ञिता

निष्क्रान्ता शूलभेदाच्च सर्वपापक्षयङ्करी।
या सा गीर्वाणनाम्न्यन्या वहेत्पुण्या महानदी ॥ १२ ॥
पतिता कुण्डमध्ये तु यत्र भिन्नं त्रिशूलिना।
शम्भुना च पुरा तात ! उत्पाद्य च सरस्वती ॥ १३ ॥
सा तत्र पतिता राजन्प्राचीनाघविमोचिनी।
भास्वत्याश्रितयं यत्र शिला गीर्वाणसञ्ज्ञिता ॥ १४ ॥

तत्र तीर्थे च तत्तीर्थं न भूतं न भविष्यति। केदारश्च प्रयागश्च कुरुक्षेत्रं गया तथा

अन्यानि च सुतीर्थानि कलां नार्हन्ति षोडशीम्।
पञ्च स्थानानि तीर्थानि पृथग्भूतानि यानि च ॥ १६ ॥
वक्ष्यामि च समासेन एकैकं च पृथक्पृथक्।
गया नाम्न्यां यथा पुण्या चक्रतीर्थं च तत्समम् ॥ १७ ॥

धर्मारण्ये यथा कूपं शूलभेदं च तत्समम्। ब्रह्मयूपं यथा पुण्यं देवनद्यास्तथैव च

यथा गयाशिरः पुण्यं सुराणां च यथा शिला।

यथा च पुष्करं स्थानं मार्कण्डहृद एव च ॥ १६ ॥

दत्त्वा पिण्डोदकं तत्र पितृणां च तथाक्षयम् । यस्तत्र कुरुते श्राद्धं तोयं पिबति नित्यशः
मुच्यते सर्वपापैस्तु उरगः कञ्चुकैरिव । अनिन्द्यान्पूजयेद्विप्रान्दम्भक्रोधविवर्जितान्
त्रयोदशादिने स्नात्वा त्रयोदशगुणं भवेत् । अभ्यर्चितं सुरं दृष्ट्वा गणनाथं गजाननं
सर्वे विघ्ना विनश्यन्ति दृष्ट्वा कम्बलक्षेत्रपम् । पूजयेत्परया भक्त्या शूलपाणिं महेश्वर

दक्षस्य पूर्वभागे तु उमा पूज्या प्रयत्नतः ।

मार्कण्डेशं ततो भक्त्या पूजयेद्गुहवासिनम् ॥ २४ ॥

मुच्यन्ते पातकैः सर्वैर्ब्रह्महत्यासमन्विते । गुहामध्ये प्रविष्टस्तु जपेन्मृत्युञ्जयं शुभ
नीलपर्वतजं पुण्यं पञ्चाशेन लभेत सः । निवसन्ति तत्र नित्यं त्वादित्यमरुतः सा
सर्वदेवमयस्थानं कोटिलिङ्गमनुत्तमम् । यथा नदीनदाः सर्वे सागरे यान्ति संक्षयम्

तथा पापानि नश्यन्ति शूलभेदस्य दर्शनात् ।

मध्यभो दृश्यतेऽद्यापि प्रत्ययो ह्यवनीपते ॥ २८ ॥

चित्कुलिङ्गालिङ्गम चैवस्वच्छे भानवोगतः । द्वितीयः प्रत्ययस्तत्र तैलबिन्दुसमन्वि
एष हि प्रत्ययस्तत्र शूलभेदप्रभावजः । यः स्मरेच्छूलभेदं तु त्रिकालं नियमेव ■
मपुनर्भवे साक्षात्स महाम्बुमत्तरोत्तरः । नकरूपं चिन्तयामासपूर्वेऽह त्रिदशैरपि
गुह्याद्गुह्यतरं तीर्थं सदा गोप्यं कृतं मया । सर्वपापहरं पुण्यं सर्वदोषप्रमुक्तमम् ।
सर्वतीर्थमयं तीर्थं शूलभेदं जनेश्वर । श्रुते यस्य प्रभावे तु मुच्यते सर्वपातकैः ॥ ३३ ॥
शूलभेदं मया तात लेशात्कथितं तव । यः शृणोति नरो भक्त्या मुच्यते सर्वपातकैः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शूलभेदप्रशंसावर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

# पञ्चचत्वारिंशोऽध्यायः

## शूलभेदनामकथनेऽन्धकप्रशंसनवर्णनम्

श्रीमार्कण्डेय उवाच

एष एव पुरा प्रश्नः परिपृष्टो महेश्वरम् । राज्ञाचोत्तानपादेनऋषिदेवसमागमे ॥ १ ॥

उत्तानपाद उवाच

इदं तीर्थं महापुण्यं सर्वदेवमयं परम् । गुह्याद्गुह्यतरं स्थानं न दृष्टं न श्रुतं हर !॥

शूलभेदं कथं जातंकेनैवोत्पादितंपुरा । माहात्म्यंतस्यतीर्थस्यविस्तराच्छंसमेप्रभो

ईश्वर उवाच

आसीत्पुरा महावीर्योदानवो बलदर्पितः । मर्त्ये न तादृशःकश्चिद्विक्रमेण बलेन वा

सूनुर्ब्रह्मसुतस्याऽयमन्धकोनामदुर्मदः । निजस्थानेवसन्पापःकुर्वन्राज्यमकण्टकम्

हृष्टपुष्टो वसन्मर्त्ये स सुरैर्नाभिभूयते । भवनंतस्यपापस्य वह्नेरुपवनं यथा ॥ ६ ॥

एतस्मिन्नन्धकः काले चिन्तयामासभारत । तोषयामि महादेवंयेनसानुग्रहो भवेत्

प्रार्थयामि वरंदिव्यं योमेमनसिवर्त्तते । परंसनिश्चयं कृत्वासोऽन्धको निर्गतोगृहात्

रेवातटं समासाद्य दानवस्तपसि स्थितः ।

उग्रं तपश्चचाराऽसौ दारुणं लोमहर्षणम् ॥ ६ ॥

दिव्यं वर्षसहस्रं स निराहारोऽभवत्ततः । द्वितीयं तु सहस्रं स न्यवसद्वारिभोजनः

तृतीयं तु सहस्रं स धूमपानरतोऽभवत् । चतुर्थं वर्षसाहस्रंयोगाभ्यासेन संस्थितः

कोऽपीह नेदृशं चक्रेतपःपरमदारुणम् । अस्थिचर्माऽवशेषोऽसौ यावत्तिष्ठतिभारत

तस्य मूर्ध्नि ततो राजन्धूमवर्त्तिर्विनिःसृता ।

देवलोकमतीत्याऽसौ कैलासं व्याप्य संस्थिता ॥ १२ ॥

तावद्देवसमीपस्था उमावचनमब्रवीत् । कोऽस्त्ययं मानुषेलोकेतपसोग्रेणसंस्थितः

चतुर्वर्षसहस्राणि व्यतीयः परमेश्वर !। न केनाऽपीदृशं तप्तं तपो दृष्टं श्रुतं तथा ॥

अयनांकुरये देव विमत्रनियमाऽन्विते । सर्वस्य दन्से शीघ्रं स्वमल्पेन तपसाविभो नाक्षराङ्गं करिष्येऽन्यथा महमहेश्वर । याचमोत्याऽत्रनेहो यद्दानघोभक्तवत्सल

ईश्वर उवाच

साधुसाधु महादेवि सुवन्लक्षणलक्षिणे । अहं तंनधिआमामिहिस्वगं दानवेश्वरम्

योगाभ्यासे स्थितो भद्रे ध्यायन्त परम पदम् ।
तत्रागच्छ मया सार्द्धं यत्र तप्यत्यसौ तप ॥ १६ ॥

उमया सहितो देवो गतस्तत्र महेश्वर । अन्धिपक्षांयशीनन्तु दृष्टो देवेन शम्भुना प्रयुवाच प्रसन्नोऽसौ देवदेवो महेश्वर । भोभो कष्ट इम भीमं दारुणंलोमहर्षणम् ईदृशश्च तपो घोरकस्माद्धम त्वया कृतम् । यत्दात्स्यास्यहवत्स यत्नोमनसिवर्तते

अन्धक उवाच

यदि तुष्टोऽसिमे देवयद्योयदि शङ्कर । सुरान्सर्वान्धिनेत्स्यामित्वत्प्रसादान्महेश्वर

ईश्वर उवाच

स्वप्नेऽपि त्रिदशा सर्वे न वाद्वध्या कदाचन ।
मनस्भाव्य न वक्तव्य मनसो यत्र रोचते ॥ २४ ॥
अन्य किमपि याचस्व यत्ते मनसि वर्तते ।
स्वर्गे वा यदि वा मर्त्ये पातालेषु च संस्थितान् ॥ २५ ॥
मर्त्येषु विविधान्भोगान्भोक्ष्यसि त्वं यथेप्सितान् ।
कुरु निष्कण्टक राज्य स्वग देवपतिर्यथा ॥ २६ ॥
देवस्य वचन श्रुत्वा सोऽन्धको विमना स्थित ।
वृथा क्लेशश्च मे जातो न किञ्चित्साधित मया ॥ २७ ॥
निश्वास परम मुक्त्वा निपपात धरातले ।
मूर्च्छितोयथावृक्षोनिरुच्छ्वासस्तदाभवत् ॥ २८ ॥

मूर्च्छापन्न ततो दृष्ट्वा देवी वचनमब्रवीत् । य कामकामयत्येष तमस्मै देहि शङ्कर

भक्तानुपेक्षमाणस्य सवाऽकीर्तिर्भविष्यति ॥ ३० ॥ –

ईश्वर उवाच

यदि दास्ये वरं देवि इच्छाभूतं कदाचन। ततो न मंस्यते विष्णुं न ब्रह्माणं न मामपि

उच्चत्वमाप्तो देवेशि! अन्यानपि सुरासुरान्॥ ३२॥

देव्युवाच

कमप्युपायमाश्रित्य उत्थापय महेश्वर!। विष्णुवर्जं सुरान्सर्वाञ्जयस्वेति वरं वद॥

ईश्वर उवाच

उपायः शोभनो देवि! यो मे मनसि वर्त्तते।

तमेवास्मै प्रदास्यामि यस्त्वया कथितो वरः॥ ३४॥

ततोऽमृतेन संसिक्तः स्वस्थोऽभूत्तत्क्षणादयम्।

तथा पुनर्नवो जातः सर्वाऽवयवशोभितः॥ ३५॥

शृणुष्वैकमनाभूत्वागृहाण वरमुत्तमम्। विष्णुवर्जंप्रदास्यामियत्तवाभिमतंप्रियम्

सर्वं च सफलं तुभ्यं मा धर्मस्तेऽन्यथा भवेत्।

ददामीति वरं तुभ्यं मन्यसे यदि चाऽसुर!॥ ३७॥

विष्णुवर्जं सुरान्सर्वाञ्जेष्यसि त्वं च मां विना॥ ३८॥

अन्धक उवाच

भवत्वेवमिति प्राह चक्रमास्थायकेवलम्। विष्णुवर्जं विजेष्येऽहंस्वबलेन महेश्वर!

कृतार्थोऽहं हि सञ्जात इत्युक्त्वा प्रणतिं गतः।

गच्छ देवो मया सार्द्धं कैलासशिखरं वरम्॥ ४०॥

वृषपुङ्गवमारुह्य देवोऽसावुमया सह। वरंदत्त्वा स तस्यैवंतत्रैवान्तरधीयत॥ ४१

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे अन्धकवरप्रदानवर्णनंनाम पञ्चचत्वारिंशोऽध्यायः॥ ४५॥

# षट्चत्वारिंशोऽध्यायः

## शचीहरणवर्णनम्

### श्रीमार्कण्डेय उवाच

स दानवोवरं लब्ध्वाजगामस्वपुरं प्रति । ददर्श स्वपुरंराजञ्छोभितविविधैर्वरैः
उद्यानैश्चैव विविधैः कदलीषण्डमण्डितैः । पनसैर्लकुचैश्चैवाम्रातैराम्रैश्च चम्पकैः
अशोकैर्नारिकेरैश्चमातुलिङ्गैः सदाडिमैः । नानावृक्षैश्चशोभाढ्य तडागैरुपशोभितम्
देवतायतनैर्दिव्यैर्ध्वजमालासुशोभितैः । वेदाध्ययननिर्घोषैर्मङ्गलाद्यैर्विनादितम् ॥

प्राविशद्भवने दिव्ये काञ्चने रुक्ममालिनि ।
अपश्यत्स सुतान्भार्याममात्यान्दासभृत्यकान् ॥ ५ ॥

ततो जयप्रदान्सर्वानितश्चेतश्च धावतः । हृष्टरोमा च प्रकुर्वाणाञ्जयन्तीभिरथार्के

केचित्तोरणमाबध्य केचित्पुष्पाण्यथाकिरन् ।
मातुलिङ्गकराश्चान्ये धावन्ति दानवं प्रति ॥ ७ ॥

पुरे जनाश्च दृश्यन्ते भाजनैरन्नपूरितैः । पूर्णहस्ताः प्रदृश्यन्ते तत्रैव बहवो जनाः
साक्षतैर्भाजनैस्तत्रशतसाहस्रयोषितः । मन्त्रान्पठन्ति विप्राश्चमङ्गलान्यपियोषितः

अमात्याश्चैव भृत्याश्च गजाश्चार्ढकियनि च ।
वर्धापयन्ति ते सर्वे ये केचित्पुरवासिनः ॥ १० ॥

दृष्ट्वा तुष्टोऽवसत्तत्र सचिवैः सह सोऽन्धकः । ददर्श सजगत्सर्वं तुरङ्गाश्चपदातिकान्

तथैव विविधान्कोशांस्तत्र काञ्चनपूरितान् ।
महिषीर्गा वृषांश्चैवापश्यच्छत्राण्यनेकधा ॥ १२ ॥

स एवमन्धकस्तत्र कियन्त कालमावसत् । दृष्ट्वा तुष्टोऽवसन्मर्त्ये स सुरैर्नाभ्यभूयत

वरं लब्धं तु तं ज्ञात्वा शङ्किताः स्वर्गवासिनः ।
एकीभूताश्च ते सर्वे वासवं शरणं गताः ॥ १४ ॥

शक्र उवाच

कथमागमनंवोऽत्र सर्वेषामपिनाकिनाम् ।
कस्माद्वो भयमुत्पन्नमागताःशरणं कथम ।
ततस्ते ह्यमराः सर्वे शक्रमेतद्वचोऽब्रुवन् ॥ १६ ॥

देवा ऊचुः

सुरनाथान्धकोनाम दैत्यः शम्भुवरोर्जितः । अजेयःसर्वदेवानांकि नुकार्यमतः परम्
तत्त्वं चिन्तय देवेश! क उपायो विधीयताम् ।
इत्थं वदन्ति ते देवाः शक्राग्रे मन्त्रणोद्यताः ॥ १८ ॥
मन्त्रयन्ति च यावद्वैतावच्चारमुखेरितम् । ज्ञात्वातत्र स दैत्योवंदानवोनिर्गतोगृहात्
एकाकी स्यन्दनाऽऽरूढ आयुधैर्बहुभिर्वृतः । दुर्गमं मेरुपृष्ठं स लीलयैव गतो नृप
स्वर्णप्राकारसंयुक्तं शोभितं विविधाश्रमैः ।
दुर्गमं शत्रुवर्गस्य तदा पार्थिवसत्तम !॥ २१ ॥
प्रविवेशाऽऽसुरस्तत्र लीलया स्वगृहे यथा । वृत्रहाभयमापन्नःस्वकीयं चासनंददौ
उपविष्टोऽन्धकस्तत्र शक्रस्यैवाऽऽसने शुभे ।
आस्थानं कलयामास सर्वतस्त्रिदशावृतम् ॥ २३ ॥

शक्र उवाच

किं तवाऽऽगमनं चाऽत्र किं कार्यं कथयस्व मे ।
यदस्मदीयं चित्तं हि तत्ते दास्यामि दानव ! ॥ २४ ॥

अन्धक उवाच

नाऽहं वै कामयेकोशंनगजांश्चसुरेश्वर !। स्वकीयंदर्शयस्वाऽद्यस्वर्गंशृङ्गारभूषितम्
ऐरावतं महानागं तं चैवोच्चैः श्रवोहयम् । उर्वश्यादीनि रत्नानि मम दर्शय गोपते
पारिजातकपुष्पाणि-वृक्षजातानिनेकशः ।
वादित्राणि च सर्वाणि दर्शयस्व शचीपते !॥ २७ ॥
तस्य तद्वचनं श्रुत्वा शक्रश्चिन्तितवानिदम् ।

# सप्तचत्वारिंशोऽध्यायः

## सब्रह्मदेवैर्विष्णोरुपस्थानमनुस्वलोकगमनवर्णनम्

मार्कण्डेय उवाच

गीर्वाणाश्च ततः सर्वे ब्रह्माणं शरणं गताः । गजैर्गिरिवराकारैर्हयैश्चैव गजोपमैः ॥
स्यन्दनैर्नगराकारैः सिंहशार्दूलयोजितैः । कच्छपैर्महिषैश्चान्यैर्मकरैश्च तथाऽपरे
ब्रह्मलोकमनुप्राप्ता देवाःशक्रपुरोगमाः । दृष्ट्वा पद्मोद्भवं देवं साष्टाङ्गं प्रणताः सुराः

देवा ऊचुः

जयदेव जगद्वन्द्य जय संसृतिकारक !। पद्मयोने सुरश्रेष्ठ त्वामेव शरणं गताः ॥ ४॥
सोद्वेगं भाषितं श्रुत्वा देवानां भाविताऽऽत्मनाम् । मेघगंभीरयावाचादेवराजमुवाचह
किमत्राऽऽगमनं देवाः सर्वे गीर्वाणसत्तमाः । केनापमानिताःसर्वेशीघ्रंमेकथ्यतांस्वयम्

देवा ऊचुः

अन्धकाख्यो महादैत्यो बलवान्पद्मसम्भव ।
तेन देवगणाः सर्वे धनरत्नैर्वियोजिताः ॥ ७ ॥
हत्वा देवगणांस्तावदसिचक्रपरश्वधैः ।
गृहीत्वा शक्रभार्यां स दानवोऽपि गतो बलात् ॥ ८ ॥
देवानां वचनं श्रुत्वा ब्रह्मालोकपितामहः । चिन्तयामासराजेन्द्रवधार्थंदानवस्यह
अवध्यो दानवः पापः सर्वेषां वो दिवौकसाम् ।
स त्राता सर्वजगतां नान्यो विद्येत कुत्रचित् ॥ १० ॥
एवमुक्ताः सुराः सर्वे ब्रह्मणा तदनन्तरम् । ब्रह्माणं ते पुरस्कृत्य गतायत्र स केशवः
तुष्टुवुर्विविधैः स्तोत्रैर्ब्रह्माद्याश्चक्रपाणिनम् ॥ ११ ॥

देवा ऊचुः

जय त्वं देवदेवेश लक्ष्म्या वक्षस्थलाऽऽश्रितः । असुरक्षय देवेश वयं ते शरणं गताः

स्तूयमानः सुरैः सर्वैर्ब्रह्माद्यैश्च जनार्दनः । संप्रहृष्टमना भूत्वा सुरानिदमुवाच ह

श्रीवासुदेव उवाच

स्वागतं देवविप्राणां सुप्रभाताऽद्य शर्वरी ।
किं कार्यं प्रोच्यतां शीघ्रं कस्य रुष्टा दिवौकसः ॥ १४ ॥
किं दुःखं कश्च सन्तापः कुतो वा भयमागतम् ।
कथयन्तु महाभागाः कारणं यन्मनोगतम् ॥ १५ ॥
पराभवः कृतो येन सोऽद्य यातु यमालयम् । एवमुक्तास्तु कृष्णेन कश्यपाद्याः सुरसत्त
दर्शयन्तः स्वकान्देहाँल्लज्जमानाः शचीसुराः ।
हृतराज्या ह्यन्धकेन कृता निस्तेजसः प्रभो ॥ १७ ॥
पितेव पुत्रं परिरक्ष देव अहीन्द्रशायिन् सह पुत्रपौत्रैः ।
तथेति चोक्त्वा कमलासनेन सुरासुरैर्वन्दितपादपद्मः ॥ १८ ॥
शङ्खं चक्रं गदां चापं सङ्गृह्य परमेश्वरः । उत्थितो भोगपर्यङ्काच्छेषानां पुरतस्त

श्रीवासुदेव उवाच

पाताले यदि वा स्वर्गे नाके वा यदि तिष्ठति । हनिष्यामि महापापं येन सन्तापिताः सुर
स्वं स्थानं यान्तु गीर्वाणाः सन्तुष्टा भावितौजसः ।
विष्णोस्तद्वचनं श्रुत्वा ब्रह्माद्यास्ते महात्मनः ॥ २१ ॥
स्वयानैस्तु हरिं नत्वा हृदि तुष्टा दिवं ययुः ॥ २२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे विष्णुप्रार्थनमनुगीर्वाणस्वर्गगमनवर्णनंनाम
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

# अष्टचत्वारिंशोऽध्यायः

## अन्धकवधतद्वरप्रदानवर्णनम्

उत्तानपाद उवाच

कस्मिन्स्थानेऽवसद् देव! सोऽन्धको दैत्यपुङ्गवः ।
सर्वान्देवांश्च निर्जित्य कस्मिन्स्थाने समास्थितः ॥ १ ॥

श्रीमहेश उवाच

प्रविष्टो दानवोयत्रकथयामिनराधिप !। पातालकोकमाश्रित्यकन्याविध्वंसतेतुसः
तत्र स्थितं तं विज्ञाय चापमादाय केशवः ।
व्यसृजद् बाणमाग्नेयं दह्यतामिति चिन्तयन् ॥ ३ ॥
दह्यमानोऽग्निनासोऽपिवारुणास्त्रंससन्दधे । वारुणास्त्रेण महताआग्नेयंशमितंतदा
ततोऽसौ चिन्तयामास केन बाणो विसर्जितः ।
कस्यैषा पौरुषी शक्तिः को यास्यति यमालयम् ॥ ५ ॥
ततोऽन्धको मृधेक्रुद्धोबाणमार्गेणनिर्गतः । सदृष्ट्वाबाणमार्गेणचापहस्तंजनार्द्दनम्

अन्धक उवाच

न शर्म लप्स्यसे ह्यद्य मया दृष्ट्याऽभिवीक्षितः ।
न शक्नोषि तथा गन्तुं नागः शार्दूलदर्शनात् ॥ ७ ॥
आगच्छति यथा भक्ष्यं मार्जारस्य च मूषिकः ।
न शक्नोषि तथा यातुं संस्थितस्त्वं ममाऽग्रतः ॥ ८ ॥
अहं त्वांप्रेषयिष्यामियममार्गेसुदारुणे । अहमन्वेषयिष्यामिकिलयास्यामितेगृहम्
उपनीतोऽसि कालेन संग्रामेमम केशव । येत्वयानिर्जिताः पूर्वं दानवाअप्यनेकशः
न भवन्ति पुमांसस्तेस्त्रियस्ताश्चैव केशव । परं न शस्त्रसंग्रामंकरिष्यामित्वयासह
वदतो दानवेन्द्रस्य न चुकोप स केशवः । अयुध्यमानं तं दृष्ट्वाचिन्तयामास ...

अन्धक उवाच

न तत्र सिद्ध्यते कार्यं देवं प्रति महेश्वरम् ॥ २६ ॥

श्रीभगवानुवाच

पुत्र त्वं शिखरं गत्वा धूनयस्व बलेन च ॥ ३० ॥
विधूते तत्र देवेशः कोपं कर्त्ता सुदारुणम् । कोपितःशङ्करोरौद्रं युद्धंदास्यतिदानव
विष्णुवाक्यादसौ पापो गतो यत्र महेश्वरः ।
कैलासशिखरं प्राप्य धुनोति स्म मुहुर्मुहुः ॥ ३२ ॥
धूनिते तत्र शिखरे कम्पितंभुवनत्रयम । निपेतुः शिखराग्राणिकम्पमानान्यनेकशः
चत्वारः सागराः क्षिप्रमेकीभूता महीपते । निपेतुरुल्कापाताश्चपादपा अप्यनेकशः
उमया सहितो देवो विस्मयंपरमंगतः । गाढमालिङ्ग्य गिरिजा देवं वचनमब्रवीत्
किमर्थं कम्पते शैलः किमर्थं कम्पतेधरा । किमर्थंकम्पते नागो मर्त्यःपातालमेवच
किं वा युगक्षयो देव तन्ममाख्यातुमर्हसि ॥ ३६ ॥

ईश्वर उवाच

कस्यैषा दुर्मतिर्जाता क्षिप्तः सर्पमुखे करः ।
ललाटे च कृतं चर्म्म स यास्यति यमालयम् ॥ ३७ ॥
कैलासमाश्रितो येन सुप्तोऽहंयेनबोधितः । तं वधिष्येन सन्देहसम्मुखोयाभवेद्यदि
चिन्तयामास देवेशो ह्यन्धकोऽयं न संशयः ।
उपायं चिन्तयामास येनाऽसौ वध्यते क्षणात् ॥ ३६ ॥
आगताश्च सुराःसर्वे ब्रह्माद्याः वसुभिः सह । रथं देवमयं कृत्वा सर्वलक्षणसंयुतम्
केचिद्देवाः स्थिताश्चक्रे केचित्तुण्डाग्रपार्श्वयोः ।
केचिन्नाभ्यां स्थिता देवाः केचिद्धुर्येषु संस्थिताः ॥ ४१ ॥
धुरीषु निश्चलाः केचित्केचिद्यूपेषु संस्थिताः ।
केचित्स्यन्दनसंस्तम्भाः केचित्स्यन्दनवेष्टकाः ॥ ४२ ॥
आमलसारकेऽन्येऽपि अन्येऽपि कलशे स्थिताः ।

रिपोर्भयङ्करं दिव्यं ध्वजमालाविशोभितम् ॥ ४३ ॥

रथं देवमयं कृत्वा तमारूढो जगद्गुरुः । निर्ययौ दानवो यत्र कोपाविष्टो महेश्वरः
तिष्ठ तिष्ठेत्युवाचाद्य च प्रयास्यसि दुर्मते ।। शरासनं करे गृह्य शरान्धिक्षेप दानवे

दानवेऽधिष्ठिते युद्धे शरैश्चिच्छेद सायकान् ।

शरासारेण तत्रैव सन्धकारं ह्यादितस्तदा ॥ ४४ ॥

न तत्र दृश्यते सूर्यो नाकाशं न च चन्द्रमाः । आग्नेयमस्त्रं व्यसृजद्दानवोऽपि रिपुं प्रति
दह्यमाना शराङ्गारैस्तत्रस्थाः सर्वदेवताः । रक्ष रक्ष महादेव दह्यमानास्तु दानवात्

ततो देवाधिदेवोऽसौ वारुणास्त्रमथोऽसृजत् ।

वारुणास्त्रेण निमिषादाग्नेयं वारितं तदा ॥ ४६ ॥

दानवेन ततो मुक्तं वायव्यास्त्रं रणाजिरे । वारुणं वायुना तत्र वायव्यास्त्रविनाशितम्
देवो व्यसर्जयत्सार्पं क्रोधाविष्टेन चेतसा । सार्पं नाशितवान् सर्पैस्त्वन्तकसंशयः
दानवेन ततो मुक्तं गरुडास्त्रं च लीलया । गारुडास्त्रं च तद्दृष्ट्वा सार्पं नैव व्यदृश्यत
ततो देवाधिदेवेशेन नारसिंहं विसर्जितम् । नारसिंहास्त्रवेगेन गारुडास्त्रं प्रणाशितम्
अस्त्रमस्त्रेण शाम्येत न बाध्येत परस्परम् । महद्युद्धमभूत्तत्र सुरासुरभयङ्करम् ॥
चक्रनाराचैर्भिन्दिपालैस्तोमरैः खड्गमुद्गरैः । अस्त्रैश्च शस्त्रैस्तथा भल्लैः कर्णिकारैश्च शोभनैः

एवं न शक्यते हन्तुं दानवो विविधायुधैः ।

गदा ज्वालाकरालाश्च खड्गनाराचतोमराः ॥ ५६ ॥

युगान्तेन विमुक्तास्तु समरे दानवं प्रति । न सस्पृशुस्तस्य गात्राणि वेगीडम्बुरिव

आयुधानि ततस्त्यक्त्वा बाहुयुद्धमुपस्थितौ ।

करं करेण संगृह्य प्रहरन्तौ स्वमुष्टिभिः ॥

रणप्रयोगैर्युध्यन्तौ युयुधाते शिवान्धकौ ॥ ५८ ॥

श्रीमार्कण्डेय उवाच

अन्धकं प्रति देवेशश्चिन्तयामास निग्रहम् ।

हनिष्यामि न सन्देहो दुष्टात्मानं न संशयः ॥ ५९ ॥

स शिवेन यदा क्षिप्तः पतितः पृथिवीतले । ऊर्ध्वबाहुरधोवक्त्रो दानवोनृपसत्तम
क्रोधाधिष्ठेनदेवेशःसंग्रामेदेवशत्रुणा । कक्षयोःकुहरेक्षिप्त्वाबन्धेनाऽऽक्रम्यपीडितः

निस्पन्दश्चाऽभवद्देवो मूर्च्छायुक्तो महेश्वरः ।
मूर्च्छापन्नं तु तं ज्ञात्वा चिन्तयामास दानवः ॥ ६२ ॥

हाहाकष्टं कृतं मेऽद्यदुष्कृतंपापकर्मणा । किंकरोमिकथंकर्मकस्मिन्स्थानेतुमोचये
गृहीत्वादेवमुत्सङ्गे गतः कैलासपर्वतम् । शय्यायांशङ्करंन्यस्यनिर्ययौदैत्यराट्ततः
शय्यायां पतितोदेवः प्रपेदे वेदनांततः । तावद्ददर्श चात्मानं स्वकीयभवनस्थितम्
पराभवः कृतोमह्यं कथं तेन दुरात्मना । क्रोधावेगसमाविष्टो निर्ययौ दानवम्प्रति

आयसीं लगुडीं गृह्य प्रभुर्भारसहस्रजाम् ।
दानवं च ततो दृष्ट्वा प्राक्षिपत्तस्य मूर्द्धनि ॥ ६७ ॥

खड्गेनताडयामास दानवः प्रहसन्रणे । देवेनाथस्मृतं चाऽस्त्रंकौच्छेराख्यंमहाहवे
दीप्यमानंसमुत्सृज्यहृदयेताडितःक्षणात् । ततः स ताडितस्तेन रुधिरोद्गारमुद्वमन्
पतितोऽधोमुखोभूत्वा ततः शूलेन भेदितः । पुनश्च देवदेवेन शूलेन छिद्लीकृतः ॥

शूलाग्रेऽसौ स्थितः पापो भ्रान्तवांश्चक्रवत्तदा ।
ये ये भूम्यां पतन्ति स्म तत्कायाद्रक्तबिन्दवः ॥ ७१ ॥

ते ते सर्वे समुत्तस्थुर्दानवाःशस्त्रपाणयः । व्याकुलस्तुततोदेवो दानवेन तरस्विना

देवेनाऽथ स्मृता दुर्गा चामुण्डा भीषणानना ।
आयाता भीषणाकारा नानायुधविराजिता ॥ ७३ ॥
महादंष्ट्रा महाकाया पिङ्गाक्षी लम्बकर्णिका ।
आदेशो दीयतां देव! को यास्यति यमालयम् ॥ ७४ ॥

ईश्वर उवाच

पिबास्य रुधिरं भद्रे यथेष्टं दानवस्य च । निपतद्रुधिरंभूमौदुर्गेगृह्णीष्व मा चिरम्
निहन्मि दानवंयावत्साहाय्यंकुरुसुन्दरि । एवमुक्ता तु सा दुर्गा पपौचरुधिरंततः
निहतादानवाःसर्वे देवेशेन सहस्रशः । अन्धकोऽपिचतान्दृष्ट्वा दानवाननिपातम्

# एकोनपञ्चाशत्तमोऽध्यायः

## शूलभेदोत्पत्तिमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

अन्धकं तु निहत्याथ देवदेवो महेश्वरः। उमया सहितो रुद्रः कैलासमगमन्नगम् ॥
आगताश्चततोदेवा ब्रह्माद्याश्चसवासवाः। हृष्टास्तुष्टाश्चतेसर्वंप्रणेमुःपार्वतीपतिम्

ईश्वर उवाच

उपाविशन्तु ते सर्वे ये केचन समागताः। निहतो दानवोह्येष गीर्वाणार्थे पितामह
रक्तेन तस्य मे शूलं निर्म्मलं नैव जायते। शुभव्रततपोजप्यरतो ब्रह्मन्मया हतः ॥
कर्तुमिच्छाम्यहं सम्यक्तीर्थयात्रां चतुर्मुख !।
आगच्छन्तु मया सार्द्धं ये यूयमिह सङ्गताः ॥ ५ ॥
इत्युक्त्वादेवदेवेशःप्रभासंप्रतिनिर्ययौ। प्रभासाद्यानितीर्थानि गङ्गासागरमध्यतः
अवगाह्यापिसर्वाणि नैर्मल्यंनाभवन्नृप !। नर्मदायांततो गत्वा देवोदेवैः समन्वितः
उत्तरं दक्षिणं कूलमवगाहत्प्रियव्रतः। गतस्तु दक्षिणे कूले पर्वते भृगुसञ्ज्ञितम् ॥
तत्र स्थित्वा महादेवो देवैः सह महीपते !।
भ्रान्त्वा भ्रान्त्वा चिरं श्रान्तो निर्विण्णो निषसाद ह ॥ ६ ॥
मनोहारि यतः स्थानं सर्वेषां वै दिवौकसाम्।
तीर्थं विशिष्टं तन्मत्वा स्थितो देवो महेश्वरः ॥ १० ॥
गिरिं विव्याध शूलेन भिन्नं तेन रसातलम्।
निर्मलं चाऽभवच्छूलं न लेपो दृश्यते क्वचित् ॥ ११ ॥
देवैराह्वानितातत्र महापुण्याच भारती। पर्वतान्निःसृता तत्र महापुण्यासरस्वती
द्वितीयःसङ्गमस्तत्र यथा वेण्यांसितासितः। तत्रब्रह्मास्वयंदेवोब्रह्मेशंलिङ्गमुत्तमम्
संस्थापयामासपुण्यं सर्वदुःखघ्नमुत्तमम्। तस्ययाम्येदिशोभागेस्वयंदेवोजनार्द्दनः

तिष्ठतेऽधसदातत्र विष्णुपादाग्रसंस्थिना ।अम्भसोनभवे मार्गं कुण्डमध्यस्थितस्य च
शूलाग्रेण कृता रेखा ततस्तोय वहेन्नृप ।। तत्तीर्थं च गत यत्र यत्र रेवा महानदी

जललिङ्ग महापुण्य धनतीर्थं नृपोत्तम ।।
शूलभेदे च दवेश स्नान कुर्याद्यथाविधि ॥ १७ ॥

आत्मानंमन्यतेशुद्ध न किञ्चित्कल्मषदृमम् । तस्यैवोत्तरकाष्ठायादेवदेवोजगद्गुरु

आत्मना देवदेवेश शूलपाणि प्रतिष्ठित ।
सर्वतीर्थेषु तत्तीर्थं सर्वदेवमय परम् ॥ १९ ॥

सर्वपापहर पुण्य सर्वदु खप्रमुत्तमम् । तत्र तीर्थे प्रतिष्ठाप्य देवदेव जगद्गुरु ॥

रक्षापालास्ततो मुक्त्वा शत चाष्टविनायकान् ।
क्षेत्रपाला शत साष्ट तद्रक्षन्ति प्रयत्नत ॥ २१ ॥
विघ्नास्तस्योपजायन्ते यस्तत्र स्थातुमिच्छति ।
केचित्कुटुम्बचिन्तासु व्यग्रा केचित्कृषीषु च ॥ २२ ॥

केचित्सभाप्रकुर्वन्तिकेचिद्द्रव्यार्जनेरता । परोक्षगादकुर्वन्तिकेऽपिहिंसारता सदा
परदाररता केचित्केचिद्वृत्तिविहिंसका । अन्ये केचिद्दरन्त्येव कथतीर्थेषु गम्यते
क्षुधया पीड्यते भार्या पुत्रभृत्यादयस्तदा । मोहजालेषु गोऽप्य ते एवं देवगणैनरा
पापाचाराश्रयेमर्त्या स्नान तत्र न जायते । सरक्षन्निचतत्तीर्थंदेवभृत्यगणा सदा
धन्या पुण्याश्रयेमर्त्यास्तेषां स्नानप्रजायते । सरस्वत्याभोगवत्याश्चैवयथाविशेषत

अय तु सङ्गम पुण्यो यथा वेण्या सितासित ।
दृष्ट्वा तीर्थं तु ते सर्वे गीर्वाणा हृष्टचेतस ॥ २८ ॥

देवस्य सन्निधौभूत्वा वर्णयामासुरुत्तमम् । इदं तीर्थं तु दवेश गयातीर्थेनते समम्
गुह्याद्गुह्यतमतीर्थ न भूत न भविष्यति । शूलपाणि समभ्यर्च्यइन्द्राद्यैरप्सरोगणै
यक्षकिन्नरगन्धर्वैर्दिक्पालैर्लोकपैरपि । नृत्यगीतैस्तथा स्तोत्रै सर्वैश्चापि सुरासुरै
पूज्यमानो गणै सर्वै सिद्धैर्नागैर्महेश्वर । देवेन भेदित तत्र शूलाग्रेण नराधिप ॥

त्रिधा यत्रदृश्यतेऽद्यापि ह्यावर्त्त सुरपूजित ।

कुण्डत्रयं नरव्याघ्र! महत्कलकलान्वितम् ॥ ३३ ॥
सर्वपापक्षयकरं सर्वदुःखघ्नमुत्तमम् । तत्र तीर्थे तु यः स्नाति उपवासपरायणः ॥
दीक्षामन्त्रविहीनोऽपि मुच्यते चाब्दिकादघात् ।
ये पुनर्विधिवत्स्नान्ति मन्त्रैः पञ्चभिरेव च ॥ ३५ ॥
वेदोक्तैः पञ्चभिर्मन्त्रैः सहिरण्यघटैः शुभैः । अक्षरैर्दशभिश्चैव षड्भिर्वा त्रिभिरेव वा
पृथग्भूतैर्द्विजातीनां तीर्थे कार्यं नराधिप !।
ब्रह्मक्षत्रविशां चाऽपि स्त्रीशूद्राणां तथैव च ॥ ३७ ॥
पुरुषाणां त्रयीं ध्यात्वा स्नानं कुर्याद्यथाविधि ।
दशाक्षरेण मन्त्रेण ये पिबन्ति जलं नराः ॥ ३८ ॥
ते गच्छन्ति परंलोकं यत्र देवोमहेश्वरः । केदारे च यथा पीतं रुद्रकुण्डे तथैव च ॥
पञ्चरेफसमायुक्तं क्षकारं सुरपूजितम् । ॐकारेण समायुक्तमेतद्वेद्यं प्रकीर्तितम् ॥
यस्तत्र कुरुते स्नानं विधियुक्तो जितेन्द्रियः । तिलमिश्रेणतोयेन तर्पयेत्पितृदेवताः
कुलानां तारयेद्विंशं दशपूर्वान्दशापरान् । गयादिपञ्चस्थानेषु यः श्राद्धं कुरुते नरः
स तत्र फलमाप्नोति शूलभेदे न संशयः ।
यस्तत्र विधिना युक्तो दद्याद्दानानि भक्तितः ॥ ४३ ॥
तदक्षयं फलंतत्र सुकृतं दुष्कृतं तथा । गयाशिरो यथा पुण्यं पितृकार्येषु सर्वदा
शूलभेदं तथा पुण्यं स्नानादानादितर्पणैः ।
भक्त्या ददाति यस्तत्र काञ्चनं गां महीं तिलान् ॥ ४५ ॥
आसनोपानहौ शय्यां वराश्वान्क्षत्रियस्तथा ।
वस्त्रयुग्मं च धान्यं च गृहं पूर्णं प्रयत्नतः ॥ ४६ ॥
स योक्त्रं लाङ्गलं दद्यात्कृष्टां चैव वसुन्धराम् ।
दानान्येतानि यो दद्याद् ब्राह्मणे वेदपारगे ॥ ४७ ॥
श्रोत्रिये कुलसम्पन्ने शुचिष्मति जितेन्द्रिये ।
श्रुताध्ययनसम्पन्ने [illegible]

त्रयोदशाद स्वैश्चैव त्रयोदशगुणं भवत् ॥ ४८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शूलभेदोत्पत्तिमाहात्म्यवर्णननाम
कोनपञ्चाशत्तमोऽध्याय ॥ ४९ ॥

---

## पञ्चाशत्तमोऽध्याय

### पात्रापात्रपरीक्षादानादिनियमवर्णनम्

उत्तानपाद उवाच

द्विजाश्च कीदृशा पूज्या मनुष्या कादृशा स्मृता ।
श्राद्ध पैतादिके कार्ये दाने चैव विशारत ॥ १ ॥
यदि श्रद्धा भवद्वियोगात्श्राद्धादिके विधौ ।
एतदाख्याहि मे देव कस्य दाने न हीयते ॥ २ ॥

ईश्वर उवाच

यथाकाष्ठमयोहस्ती यथाचर्ममयोमृग । ब्राह्मणश्चानधीयानस्त्रयस्तेनामधारका
यथा षण्ढोऽफल स्त्रिषु यथा गौगवि चाफला ।
यथाचान्ऽफल दान तथा विप्रोऽनृचोऽफल ॥ ४ ॥
यथाऽनृणेष्वीनमुप्त्वावपनान्लभते फलम् । तथाऽनृचेदविदस्यान्दाता लभत फलम्
रोगी हीनाऽतिरिक्ताङ्ग काण पौनभवस्तथा ।
अवकीर्णी श्यावदन्त सर्वाशी वृषलीपति ॥ ६ ॥
मित्रध्रुक्पिशुन सोमविक्रयीपरनिन्दक । पितृमातृगुरुत्यागीनित्यब्राह्मणनिन्दक
शूद्रान मन्त्रसयुक्त यो विप्रो भक्षयेत्तप ।
सोऽस्पृश्य कमभाण्डाय स्पृष्ट्वा स्नान समाचरेत् ॥ ८ ॥

कुनखीवृषली स्तेयी वाद्रुधुष्यःकुण्डगोलकौ। महादानरतोयश्च यश्चात्महननेरतः
भृतकाध्यापकः क्लीवः कन्यादूष्यभिशस्तकः।
एते विप्राः सदा त्याज्याः परिभाव्य प्रयत्नतः ॥ १० ॥
प्रतिग्रहं गृहीत्वा तु वाणिज्यं यस्तु कारयेत्।
तस्य दानं न दातव्यं वृथा भवति तस्य तत् ॥ ११ ॥
श्रुताऽध्ययनसम्पन्ना ये द्विजावृत्तनत्परा। तेषां प्रदीयते दानं सर्वमक्षयतामव्रजेत्
दरिद्रान्भरभूपालमासमृद्धान्कदाचन। व्याधितस्यौषधंपथ्यं नीरुजस्यकिमौषधैः

उत्तानपाद उवाच

कीदृशोऽथ विधिस्तत्र तीर्थश्राद्धस्य का क्रिया।
दानं च दीयते यद्वत्तन्ममाख्याहि शङ्कर !॥ १४ ॥

ईश्वर उवाच

श्राद्धं कृत्वा गृहे भक्त्या शुचिश्चाऽपि जितेन्द्रियः।
गुरुं प्रदक्षिणीकृत्य भोज्य ग्रामान्तके ततः ॥ १५ ॥
राग्यतः प्रव्रजेतावद्यावत्सीमांनलङ्घयेत्। शूलभेदंततोगत्वास्नानं कुर्याद्यथाविधि
पञ्चस्थानेषु च श्राद्धं हव्यकव्यादिभिः क्रमात्।
पिण्डदानञ्च यः कुर्यात्पायसैर्मधुसर्पिषा ॥ १७ ॥
पितरस्तस्य तृप्यन्ति द्वादशाब्दानिपञ्च च। अक्षतैर्बदरैर्बिल्वैरिङ्गुदैर्मधुसर्पिषा ॥
सोऽपि तत्फलमाप्नोति तीर्थेऽस्मिन्नाऽत्र संशयः।
उपानहौ च यो दद्याद्ब्राह्मणेभ्यः प्रयत्नतः ॥ १९ ॥
सोऽपि स्वर्गमवाप्नोति हयारूढो न संशयः।
शय्यामश्वं च यो दद्याच्छिबिकां वा विशेषतः ॥ २० ॥
गच्छेद्विमानमारूढः सोऽप्सरोवृन्दवेष्टितः। उत्तमंयोगृहंदद्यात्सधान्यसमन्वितम्
स्वेच्छयामेवसेल्लोकेकाञ्चनेभवनेहिसः। तिलधेनुञ्चयो दद्यात्सवत्सांवस्त्रसंप्लुताम्
नाकपृष्ठेवसेत्तावद्यावदाभूतसम्प्लवम्। गृहे वा यदि वाऽरण्येतीर्थवर्त्मनिवानृप

तोयमन्नं च यो दद्याच्छिवलोके स मोदते । सर्वदानानि दीयन्ते तेषां फलमवाप्य
उदकं चान्नदानं च दद्यादनशमेव च । अन्नदानात्परं दानं न भूतं न भविष्यति

कन्यादानं तु यः कुर्याद्ब्राह्मं वा य समुद्धरेत् ।
तस्य वासो भवेत्तत्र यत्राऽहमिति नान्यथा ॥ २६ ॥

उत्तानपाद उवाच

कन्यादानं कथं स्यादिहकर्तव्यं धार्मिकैः सदा ।
परिग्रहो यथा योग्य कन्योद्वाहस्तथैव च ॥ २७ ॥
अन्यं पृच्छामि देवेश कस्य कन्या न दीयते ।
दातव्यं कुत्र तद्ब्रूहि कस्मै दत्तमथाऽक्षयम् ॥ २८ ॥
उत्तमं मध्यमं वाऽपि कनीयः स्यात्कथं विभो ।
राजसं तामसं वाऽपि निःश्रेयसमथाऽपि वा ॥ २९ ॥

ईश्वर उवाच

सर्वेषामेव दानानां कन्यादानं विशिष्यते ।
यो दद्यात्परया भक्त्याऽभिगम्य तनयां निजाम् ॥ ३० ॥
कुलीनायसुरूपाय गुणज्ञागमवादिने । सुलग्ने सुमुहूर्ते च दद्यात्कन्यामलङ्कृताम्
सभ्यान्नागाश्च वासांसि योऽत्र दद्यात्स्वशक्तितः ।
तस्य वासो भवेत्तत्र पदं यत्र निरामयम् ॥ ३२ ॥
येनाऽत्रदुहिता दत्ता प्राणेभ्योऽपि गरीयसी । तेनसर्वमिदं दत्तं त्रैलोक्यं सचराचरम्
यः कन्यार्थं ततो लब्ध्वा भिक्षते चैव तद्धनम् ।
स भवेत्कर्मचण्डालः कामुकोऽसौ भवेन्मृतः ॥ ३४ ॥
गृहेऽपि तस्य योऽश्नीयाज्जिह्वालौल्यात्कथञ्चन ।
चान्द्रायणेन शुद्ध्येत तप्तकृच्छ्रेण वा पुनः ॥ ३५ ॥

उत्तानपाद उवाच

वित्तं न विद्यते यस्य कन्यैवास्ति च यद्गृहे । कथमोद्वाहनं तस्य तनयायाः प्रकुर्वीत यदि

ईश्वर उवाच

अचिन्तेनैव कर्त्तव्यं कन्योद्वहनकं नृप !। कन्यानाम समुच्चार्य न दोषाय कदाचन॥

अभिगम्योत्तमं दानं यच्च दानमयाचितम्।
भविष्यति युगस्यान्तस्तस्यान्तो नैव विद्यते ॥ ३८ ॥
अभिगम्योत्तमं दानं स्मृतमाहूय मध्यमम्।
याच्यमानं कनीयः स्याद्देहिदेहीति चाधमम् ॥ ३९ ॥
यथैवाऽश्माऽश्मना बद्धो निक्षिप्तो वारिमध्यतः।
द्वावेतौ निधनं यातस्तद्वदज्ञमपात्रके ॥ ४० ॥

असमर्थे ततो दानं न प्रदेयं कदाचन। दातारं नयतेऽधस्तादात्मानञ्च विशेषतः॥

समर्थस्तारयेद् द्वौ तु काष्ठं शुष्कं यथा जले।
यथा नौश्च तथा विद्वान्प्रापयेदपरं तटम् ॥ ४२ ॥
आहिताग्निश्च गृह्णाति यः शूद्राणां प्रतिग्रहम्।
इह जन्मनि शूद्रोऽसौ मृतः श्वा चोपजायते ॥ ४३ ॥

वृथा क्लेशश्च जायेत ब्राह्मणे ह्यग्निहोत्रिणि। असत्प्रतिग्रहंकुर्वन्गुरुंतीचस्यगर्हितम्

अभोज्यः स भवेन्मर्त्यो दह्यते कारिणाऽग्निना।
कटकारो भवेत्पश्चात्सप्तजन्म न संशयः ४:
लज्जादाक्षिण्यलोभाच्च यद्दानं चोपरोधजम्।
भृत्येभ्यश्च तु यद्दानं तद्वृथा निष्फलं भवेत् ॥ ४६ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शूलभेदमाहात्म्ये पात्रापात्रपरीक्षादानादिनिर्णयवर्णनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

## एकपञ्चाशत्तमोऽध्यायः

### दानधर्मप्रशंसनवर्णनम्

उत्तानपाद उवाच

कस्मिन् तस्मिन् दिने शम्भो श्राद्धं दानं तथेश्वर ।
याचा तत्र प्रकर्तव्या तिथौ यस्यां वदाऽऽशु तत् ॥ १ ॥

ईश्वर उवाच

पितृतीर्थंयथापुण्यं सर्वकामिकमुत्तमम् । इदं तीर्थंतथापुण्यं अमावस्यादिनर्पणे विशेषेण ॥ कुर्वीत श्राद्धं सर्वयुगादिषु । मन्वन्तरादयोवत्स श्रूयन्तां च चतुर्दश अश्वयुक्शुक्लनवमी द्वादशीकार्तिकस्यच । तृतीया चैत्रमासस्यतथाभाद्रपदस्य च

आषाढस्यैव दशमी माघस्यैव तु सप्तमी ।
श्रावणस्याऽष्टमी कृष्णा तथाऽऽषाढस्य पूर्णिमा ॥ ५ ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ॥ ६ ॥

मन्वन्तरादयश्चैत अनन्तफलदाः स्मृता । अयनेचोत्तरे राजन्दक्षिणे श्राद्धमाचरेत्

कार्त्तिकी च तथा माघी वैशाखस्य तृतीयिका ।
पौर्णमासी च चैत्रस्य ज्येष्ठस्य च विशेषत ॥ ८ ॥

अष्टकासु च सङ्क्रान्तौ व्यतीपाते तथैव च । श्राद्धकाला इमेसर्वैदत्तमेष्वक्षयस्मृतम्
मधुमासे सितेपक्ष एकादश्यामुपोषित । निशि जागरणं कुर्याद्विष्णुपादसमीपत

धूपदीपादिनैवेद्यैः स्रङ्मालागुरुचन्दनैः ।
अथा कुर्वन्ति ये विष्णु पठेयुः प्रातनीं कथाम् ॥ ११ ॥
ऋग्यजुः साममन्त्रोक्त सूक्तं जपति यो द्विज ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १२ ॥

प्रातः श्राद्धं प्रकुर्वीत द्विजान्सम्पूज्य यत्नतः ।
दानं दद्याद्यथाशक्ति गोहिरण्याम्बरादिकम् ॥ १३ ॥
पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् । श्राद्धदस्तुव्रजेत्तत्रयत्रदेवो जनार्द्दनः
त्रयोदश्यां ततो गच्छेद् गुहावासिनि लिङ्गके ।
दृष्ट्वा मार्कण्डमीशानं मुच्यते सर्वपातकैः ॥ १५ ॥

उत्तानपाद उवाच

गुहामध्ये महादेव लिङ्गं परमशोभितम् । येन प्रतिष्ठितं देव! तन्ममाख्यातुमर्हसि

ईश्वर उवाच

त्रिषु लोकेषु विख्यातो मार्कण्डेयो मुनीश्वरः ।
दिव्यं वर्ष सहस्रं स तपस्तेपे सुदारुणम् ॥ १७ ॥
गुहामध्यं प्रविष्टोऽसौ योगाभ्यासमुपाश्रितः ।
लिङ्गं तु स्थापितं तेन मार्कण्डेश्वरसञ्ज्ञितम् ॥ १८ ॥
तत्र स्नात्वा च यो भक्त्या सोपवासो जितेन्द्रियः ।
तत्र जागरणं कुर्वन्दद्याद्दीपं प्रयत्नतः ॥ १९ ॥
देवस्यस्नपनंकुर्यादमृतैःपञ्चभिस्तथा । यथाशक्त्यासमालभ्य पूजांकुर्याद्यथाविधि
स्वशाखोत्पन्नमन्त्रैश्च जपंकुर्युर्द्विजातयः । सावित्र्यष्टसहस्रन्तुशताष्टकमथापि वा
एतत्कृत्वा नृपश्रेष्ठ! जन्मनः फलमाप्नुयात् ।
चतुर्दश्यां तु वै स्नात्वा पूजां कृत्वा यथाविधि ॥ २२ ॥
पात्रं परीक्ष्य दातव्यमात्मनः श्रेयइच्छता ।
पितरस्तस्यतृप्यन्ति द्वादशाब्दान्यसंशयम् ॥ २३ ॥
दाता स गच्छते तत्र यत्र भोगाः सनातनाः ।
गुहामध्ये प्रविष्टस्तु लोटयेच्चैव शक्तितः ॥ २४ ॥
नीले गिरौ हि यत्पुण्यं तत्समस्तं लभन्ति ते ।
शूलभेदे तु यः कुर्याच्छ्राद्धं पर्वणि पर्वणि ॥ २५ ॥

विशेषाच्चैत्रमासान्ते तस्य पुण्यफलं शृणु । केदारे चैव यत्पुण्यं गङ्गासागरसङ्गमे
सितासिते तु यत्पुण्यमन्यतीर्थे विशेषतः । अर्बुदे विघ्ने पुण्ये पुण्ये वामरपथं
गयादिसर्वतीर्थानां फलमाप्नोति मानवः । विधिमन्त्रसमायुक्तस्तर्पयेत्पितृदेवता

कुलानां तारयेद्विद्वान् दशपूर्वान्दशापरान् ।
दक्षिणस्यां ततो मूर्त्तौ शुचिर्भूत्वा समाहितः ॥ २९ ॥
न्यासं कृत्वा तु पूर्वोक्तं प्रदद्यादष्टपुष्पिकाम् ।
शास्त्रोक्तैरष्टभिः पुष्पैर्मानसैः शृणु तद्यथा ॥ ३० ॥
वारिजं सौम्यमाग्नेयं वायव्यं पार्थिवं पुनः ।
वानस्पत्यं भवेत्षष्ठं प्राजापत्यं तु सप्तमम् ॥ ३१ ॥

अष्टमं शिवपुष्पं स्यादेषां शृणु विनिर्णयम् । वारिजं सलिलं ज्ञेयं सौम्यं मधुघृतपयः

आग्नेयं धूपदीपाद्यं वायव्यं चन्दनादिकम् ।
पार्थिवं कन्दमूलाद्यं वानस्पत्यं फलात्मकम् ॥ ३३ ॥

प्राजापत्यं तु पाद्याद्यं शिवपुष्पं तु वासना । अहिंसाप्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः
तृतीयं तु दयापुष्पं क्षमापुष्पं चतुर्थकम् । ध्यानपुष्पं परं पुष्पं ज्ञानपुष्पं तु सप्तमम्

सत्यं चैवाष्टमं पुष्पमेभिस्तुष्यन्ति देवता ।
भक्त्या तपस्विनः पूज्या ज्ञानिनश्च नराधिप ॥ ३६ ॥

छत्रमावरणं दद्यादुपानद्युगलं तथा । तेन पूजितमात्रेण पूजिताः पुरवासिनः ॥
स्वर्गलोके वसेत्तावद्यावदाभूतसम्प्लवम् । शूलपाणेस्तु भक्त्या वै ज्ञात्वा कुर्वन्ति ये नराः
पञ्चामृतैः पञ्चगव्यैर्यक्षकर्दमकुङ्कुमैः । समालभेत देवेशं श्रीखण्डागुरुचन्दनैः ॥३९॥
नानाविधैश्च ये पुष्पैरर्चां कुर्वन्ति शूलिनः । निशिजागरणं कुर्युर्दीपदानप्रयत्नतः

धूपनैवेद्यकं दद्यात्पञ्चपौराणिकीं कथाम् ।
तत्र स्थाने स्थिता भक्त्या जपं कुर्वन्ति ये नराः ॥ ४१ ॥

श्रीसूक्तं पौरुषं सूक्तं पावमानं वृषाकपिम् । वेदोक्तैश्चैव मन्त्रैश्च रौद्रीं चा बहुरूपिणीम्
ब्राह्मणान्भोजयेद्भक्त्या पूजयित्वा प्रणम्य च । नानाविधैर्महाभागे शिवलोके महीयते

अग्निमीत्यादिजाप्यानि ऋग्वेदी जपते तु यः।
रुद्रान्पुरुषसूक्तञ्च श्लोकाध्यायं च शुक्रियम् ॥ ४४ ॥
इषेत्वादिकमन्त्रौघं ज्योतिर्ब्राह्मणमेव च।
गायत्र्यं चै मधु चैव मण्डलब्राह्मणानि च ॥ ४५ ॥
एताञ्जप्यांस्तु यो भक्त्या यजुर्वेदीजपेद्यदि। देवव्रतं वामदेव्यं पुरुषर्भमेव च ॥
बृहद्रथन्तरञ्चैव यो जपेद्भक्तितत्परः। स प्रयाति नरः स्थानं यत्र देवो महेश्वरः ॥
पादशौचं तथाऽभ्यङ्गं कुरुते योऽत्र भक्तितः।
गोदाने चैव यत्पुण्यं लभते नाऽत्र संशयः ॥ ४८ ॥
ब्राह्मणान्भोजयेत्तत्रमधुनापायसेनच। एकस्मिन्भोजितेविप्रेकोटिर्भवतिभोजिता
सुवर्णं रजतं वस्त्रं दद्याद्भक्त्या द्विजोत्तमे।
तर्प्पितास्तेन देवाः स्युर्मनुष्याः पितरस्तथा ॥ ५० ॥
चन्द्रसूर्यग्रहे भक्त्या स्नानं कुर्वन्ति ये नराः। देवार्चनञ्चयेकुर्युर्जपंहोमं विशेषतः
दद्याद्दानं यथाशक्ति ब्राह्मणे वेदपारगे ॥ ५१ ॥
अश्वं रथं गजं यानं तुलापुरुषमेव च। शकटं यः प्रदद्याद्वा सप्तधान्यप्रपूरितम् ॥५२
सयोक्त्रं लाङ्गलं दद्याद्युवानौ तु धुरन्धरौ।
गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ॥ ५३ ॥
अपात्रे विदुषा किञ्चिन्न देयं भूतिमिच्छता।
यतोऽसौ सर्वभूतानि दधाति धरणी किल ॥ ५४ ॥
ततो विप्राय सा देया सर्वसस्यौघमालिनी।
अथाऽन्यच्छृणु राजेन्द्र! गोदानस्य तु यत्फलम् ॥ ५५ ॥
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां प्रदृश्यते।
तावद्गौ पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ ५६ ॥
येन केनाप्युपायेन ब्राह्मणे तां समर्पयेत्। पृथ्वी दत्ता भवेत्तेन सशैलवनकानना ॥
तारयेन्नियतं दत्ता कुलानामेकविंशतिम्।

न तेषां जायते शोको न हानिर्न च दुष्कृतम् । प्रथमंपूजयेत्तत्र लिङ्गं सिद्धेश्वरं ततः

यत्र सिद्धो महाभागा व्यासः सत्यवतीसुतः ।
अस्यैव पूजनात्सिद्धो धारासर्पो महामतिः ॥ १७८ ॥
तत्र तीर्थे तु यो राजन्प्राणत्यागं करोति च ।
सूर्यलोकमसौ भित्त्वा प्रयाति शिवसन्निधौ ॥ १७९ ॥
समाःसहस्राणि च सप्त वै जले दशैकमग्नौ पतने च षोडश ।
महाहवे षष्टिरशीति गोग्रहे ह्यनाशके भारत! चाक्षया गतिः ॥ १८० ॥

पिता पितामहश्चैव तथैवप्रपितामहः । वायुभूतं निरीक्षन्ते ह्यागच्छन्तंस्वगोत्रजम्

अस्मद्गोत्रेऽस्ति कः पुत्रो यो नो दद्यात्तिलोदकम् ।
कार्त्तिक्यां च विशेषेण वैशाख्यां वा तथैव च ॥ १८२ ॥
स्वर्गतिं च प्रयास्यामस्तत्र तीर्थोपसेवनात् ।
एतत्ते कथितं सर्वं द्वीपेश्वरमनुत्तमम् ॥ १८३ ॥
यः पठेत्परया भक्त्या शृणुयात्तद्गतो नृप ! ।
सोऽपि पापविनिर्मुक्तो मोदते शिवमन्दिरे ॥ १८४ ॥

ऊपरं सर्वतीर्थानां निर्मितं मुनिपुङ्गवैः । कामप्रदं नृपश्रेष्ठ! व्यासतीर्थं न संशयः ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे व्यासतीर्थमाहात्म्यवर्णनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

# अष्टनवतितमोऽध्यायः

## प्रभासतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्रप्रभासेश्वरमुत्तमम् । विख्यातंत्रिपुलोकेषुस्वर्गसोपानमुत्तमम्

युधिष्ठिर उवाच

प्रभासं तात! मे ब्रूहि कथंजातंमहाफलम् । स्वर्गसोपानदं ह्यर्थंसंक्षेपात्कथयाशु मे

श्रीमार्कण्डेय उवाच

दुर्भगा रविपत्नी च प्रभा नामेति विश्रुता ।
तया चाऽऽराधितः शम्भुरुग्रेण तपसा पुरा ॥ ३ ॥

वायुभक्षा स्थिता वर्षंवर्षंध्यानपरायणा । ततस्तुष्टोमहादेवःप्रभायाःपाण्डुनन्दन

ईश्वर उवाच

कस्मात्त्वंक्लिश्यसे बाले! कथ्यतां यद्विवक्षितम् ।
अहं हि भास्करोऽप्येको नानात्वं नैव विद्यते ॥ ५ ॥

प्रभोवाच

मान्यो देवः स्त्रियः शम्भो! विना भर्त्रा कथञ्चिन्प्रभो !।
सगुणो निर्गुणो वाऽपि धनाढ्यो वाऽप्यकिञ्चनः ॥ ६ ॥

प्रियो वा यदि वा द्वेष्यःस्त्रीणाभर्त्तैव दैवतम् । दुर्भगत्वेनदग्धाहं सर्वामध्येसुरेश्वर
भर्त्तर्यलब्धसौख्यास्मि तेन क्लिश्याम्यहं भृशम् ॥ ७ ॥

ईश्वर उवाच

वल्लभा भास्करस्यैव मत्प्रसादाद्भविष्यसि ॥ ८ ॥

पार्वत्युवाच

अप्रमाणं भवद्वाक्यं भास्करोऽपि करिष्यति ।

वृथा क्लेशो भवेदस्याः प्रभायाः परमेश्वर !॥ ६ ॥
उमावाक्यान्महेशान ध्यातस्तिमिरनाशनः ।
आगतो गगनाद्भानुर्नर्मदोत्तररोधसि ॥ १० ॥

भानुरुवाच

आहूतोऽस्मि कथं देव! ह्यवासुरनिषूदन ॥ ११ ॥

ईश्वर उवाच

प्रभां पालय भो भानो! सन्तोषेण परेण हि ॥ १२ ॥

उमोवाच

प्रभायामन्दिरेनित्यंस्थीयतांहिमनाशन । अग्रपत्नीसमस्तानांभार्याणांक्रियतांरवे

भानुरुवाच

एवंदेविकरिष्यामितववाक्यम्वरानने । एतच्छ्रुत्वाप्रभाऽऽहूता प्रत्युवाचमहेश्वरम्

प्रभोवाच

स्वांशेन स्थीयतां देव! मन्मथारे! उमापते !।
एकांशः स्थाप्यतामत्र तीर्थस्योन्मीलनाय च ॥ १५ ॥

श्रीमार्कण्डेय उवाच

सर्वदेवमयं लिङ्गं स्थापितं तत्र पाण्डव! । प्रभासेशइतिख्यातं सर्वलोकेषुदुर्लभम्
अन्यानि यानि तीर्थानि काले तानि फलन्ति वै ।
प्रभासेशस्तु राजेन्द्र सद्यः कामफलप्रदः ॥ १७ ॥
माघमासे सितपक्षे सप्तम्यां च विशेषतः । अश्वं यः स्पर्शयेत्तत्र यथोक्तब्राह्मणेनृप
इन्द्रत्वं प्राप्यते तेन भास्करस्याऽथवा पदम् ।
स्नात्वा परमया भक्त्या दानं दद्याद् द्विजातये ॥ १६ ॥
गोप्रदातालभेत्स्वर्गंसत्यलोकंवरेश्वर । सर्वाङ्गसुन्दरीं शुभ्रां क्षीरिणींतरुणींशुभाम्
सवत्सां घण्टासंयुक्तां कांस्यपात्रावदोहिनीम् ।
ददते ये नृपश्रेष्ठ! न ते यान्ति यमालयम् ॥ २१ ॥

# एकोनशततमोऽध्यायः

## नागेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपालनर्मदादक्षिणे तटे। स्थापितंवासुकीशंतु समस्ताघौघनाशनम्

युधिष्ठिर उवाच

कस्माच्च कारणात्तात रेवाया दक्षिणे तटे।

वासुकीशः स्थापितो वै विस्तराद्वद मे गुरो !॥ २ ॥

श्रीमार्कण्डेय उवाच

एतत्सर्वं समास्थाय नृत्यं शम्भुश्चकार वै ॥ ३ ॥

श्रमादजायत स्वेदो गङ्गातोयविमिश्रितम्।

पतन्तमुरगोऽश्नाति हरमौलिविनिर्गतम्॥ ४ ॥

मन्दाकिनी ततः क्रुद्धा व्यालस्योपरि भारत !।

प्राप्नुह्यजगरत्वं हि भुजङ्ग क्षुद्रजन्तुकः ॥ ५ ॥

वासुकिरुवाच

अनुग्राह्योऽस्मिते पापोदुर्नयोऽहंहराद्गते। त्रैलोक्यपावनीपुण्यासरित्त्वंशुभलक्षणा
संसारच्छेदनकरीह्यार्त्तानामार्त्तिनाशनी। स्वर्गद्वारेस्थितात्वंहिदयांकुरुमयीश्वरि

गङ्गोवाच

कुरुष्व विपुलं विन्ध्यं तपस्त्वं शङ्करं प्रति।

ततः प्राप्स्यसि स्वं स्थानं पन्नगत्वं ममाज्ञया ॥ ८ ॥

श्रीमार्कण्डेय उवाच

ततोऽसौ त्वरितो विन्ध्यं नागो गत्वा नगं शुभम्।

तपस्तप्तुं समारेभे शङ्कराराधनोद्यतः ॥ ६ ॥

नित्यं दध्यौ महादेवं त्र्यक्षं शशिकलाचितम् । ततो वर्षशतेपूर्णे उपरुद्धो जगद्गुरुः ॥
आगतस्तत्समीपं तु श्लक्ष्णां वाणीमुदाहरत् ॥ १० ॥
वरं वरय मे वत्स पन्नग त्वं कृपाकर ॥ ११ ॥

वासुकिरुवाच

यदि तुष्टोऽसि मे देव वरं दास्यसि शङ्कर । प्रसादात्तव देवेश भूयान्निष्पापनामम
तीर्थं चास्मिन्समाख्याहि सर्वपापप्रणाशनम् ॥ १२ ॥

ईश्वर उवाच

पन्नगत्वमहापापादोरैर्वागच्छशुभङ्करीम् । याम्येतस्यास्तटे पुण्ये स्नानं कुरु यथाविधि
इत्युक्त्वान्तर्दधे देवो वासुकिस्त्वरयान्वितः । रूपेणाऽजगरेणैव प्रविष्टो नर्मदाजलम्
मार्गेण तस्य सञ्जाता जाह्नव्या स्रोत उत्तमम् ।
निर्धूतकल्मषः सर्प सञ्जातो नर्मदाजले ॥ १५ ॥
स्थापितः शङ्करस्तत्र नर्मदायां युधिष्ठिर । ततो नागेश्वरं लिङ्गं प्रसिद्धं पापनाशनम्
अष्टम्यां वा चतुर्दश्यां स्नापयेन्मधुना शिवम् ।
विमुक्तकल्मषः सद्यो जायते नात्र संशयः ॥ १७ ॥
अपुत्रा ये नराः पार्थ स्नानं कुर्वन्ति सङ्गमे ।
ते लभन्ते सुताञ्छ्रेष्ठान्पार्थवीर्योपमाञ्छुभान् ॥ १८ ॥
श्राद्धं तत्रैव यः कुर्यादुपवासपरायणः । कुलं प्रमोचयेत्प्रेतान्नरकात्पाण्डुनन्दन ॥ १९
सर्पाणां च भयं घोरं ज्ञातिवर्गे न जायते । निर्दोषं नन्दते तस्य कुलं नागप्रसादतः
एतत्ते सर्वमाख्यातं तव स्नेहान्नृपोत्तम ॥ २० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नागेश्वरतीर्थमाहात्म्यवर्णननामैकोनशततमोऽध्यायः ॥ ९९ ॥

---

# शततमोऽध्यायः

## मार्कण्डेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल तीर्थं परमरोचनम्। मार्कण्डेशमिति ख्यातं नर्मदादक्षिणेतटे

उत्तमं सर्वतीर्थानां गीर्व्वाणैर्वन्दितं शिवम्।
गुह्याद् गुह्यतरं पुत्र! नाख्यातं कस्यचिन्मया ॥ २ ॥

स्थापितं तु मया पूर्वं स्वर्गसोपानसन्निभम्।
ज्ञानं तत्रैव मे जातं प्रसादाच्छङ्करस्य च ॥ ३ ॥

अन्यस्तत्रैव यो गत्वा द्रुपदामन्तर्जलेजपेत्। स पातकैरशेषैश्च मुच्यतेपाण्डुनन्दन

वाचिकैर्मानसैश्चैव कर्मजैरपि पातकैः।
पिण्डिकां चाप्यवष्टभ्य याम्यामाशां च संस्थितः ॥ ५ ॥

योजयेच्छूलिनंभक्त्याद्वात्रिंशद्बहुरूपिणम्। देहपातेशिवं गच्छेदितिमेनिश्चयोनृप
आज्येनबोधयेद्दीपमष्टम्यांनिशिभारत। स्वर्गलोकमवाप्नोति इत्येवं शङ्करोऽब्रवीत्
श्राद्धं तत्रैवयोभक्त्याकुर्व्वीतनृपनन्दन। पितरस्तस्यतृप्यन्तियावदाभूतसम्प्लवम्
इङ्गुदैर्बदरैर्बिल्वैरक्षतेनजलेन वा। तर्प्पयेत्तत्र यो वंश्यानाप्नुयाज्जन्मनः फलम्॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मार्कण्डेश्वरतीर्थमाहात्म्यवर्णनंनाम शततमोऽध्यायः ॥१००॥

## एकाधिकशततमोऽध्यायः

### सङ्कर्षणतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् । उत्तरे नर्मदाकूले यज्ञवाटस्य मध्यत
सङ्कर्षणमितिख्यात पृथिव्या पापनाशनम् । तपश्चीर्णं पुरा राजन्बलभद्रेणतत्र वै
गीर्वाणा अपि तत्रैव सन्निधीकृपनन्दन ‍‍। उमयामहित शम्भु स्थितस्तत्रैवकेशवः
बलभद्रेणराजेन्द्रप्राणिनामुपकारत । स्थापित परया भक्त्या शङ्कर पापनाशन

यस्तत्र स्नाति वै भक्त्या जितक्रोधो जितेन्द्रिय ।
एकादश्या सिते पक्षे मधुना स्नापयेच्छिवम् ॥ ५ ॥
श्राद्ध तत्रैव यो भक्त्या पितृणामथ दापयेत् ।
स याति परम स्थान बलभद्रवचो यथा ॥ ६ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सङ्कर्षणतीर्थमाहात्म्यवर्णननामैकाधिकशततमोऽध्याय ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः

### मन्मथेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

मन्मथेश ततो गच्छेत्सर्वदेवनमस्कृतम् । स्नानमात्राद्धरो राजन्यमलोकनपश्यति
अनपत्या या च नारी श्रायाद्वैपाण्डुनन्दन । पुत्रसाल्मतेपार्थ सत्यसन्धद्दृढव्रतम्

तत्र स्नात्वा नरोराजञ्छुचि प्रयतमानस ।

१ १

उपोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३ ॥

कामिकंतीर्थराजंतु तादृशं न भविष्यति । त्रिरात्रंकुरुतेराजन् स गोलक्षफलंलभेत्
तत्र नृत्यं प्रकर्त्तव्यं तुष्यते परमेश्वरः । गीतवादित्रनिर्घोषै रात्रौ जागरणेन च ॥

एरण्ड्यां च महादेवो दृष्टोमे मन्मथेश्वरः ।
किं समर्था यमो रुष्टो भद्रो भद्राणि पश्यति ॥ ६ ॥
कामेन स्थापितः शम्भुरेतस्मात्कामदो नृप !।
सोपानः स्वर्गमार्गस्य पृथिव्यां मन्मथेश्वरः ॥ ७ ॥

विशेषश्चात्रसन्ध्यायांश्राद्धदाने च भारत । अन्नदानेनराजेन्द्र !कीर्त्तितंफलमुत्तमम्

एतत्ते सर्वमाख्यातं तव भक्त्या तु भारत !।
पृथिव्यां सागरान्तायां प्रख्यातो मन्मथेश्वरः ॥ ६ ॥

गोदानं पाण्डवश्रेष्ठत्रयोदश्यांप्रकारयेत् । चैत्रेमासिसितेपक्षे तत्रगत्वाजितेन्द्रियः

रात्रौ जागरणं कृत्वा देवस्याग्रे नृपोत्तम !।
दीपं भक्त्या घृतेनैव देवस्याग्रे निवेदयेत् ॥ ११ ॥
स्त्र्यथवा पुरुषो वाऽपि सममेतत्फलं स्मृतम् ॥ १२ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मन्मथेश्वरतीर्थमाहात्म्यवर्णनं नाम
द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

## एकाधिकशततमोऽध्याय·

### सङ्कर्षणतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् । उत्तरे नर्मदाकूले यक्षवाटस्य मध्यत
सङ्कर्षणमिति ख्यातं पृथिव्यां पापनाशनम् । तपश्चीर्णं पुरा राजन्बलभद्रेण तत्र वै
गोपिका अपि तत्रैव सन्निधौ नृपनन्दन । उमयासहित शम्भु स्थितस्तत्रैव केशव
बलभद्रेण राजेन्द्र भामिनासुपकारत । स्थापित परया भक्त्या शङ्कर पापनाशन

यस्तत्र स्नाति वै भक्त्या जितक्रोधो जितेन्द्रिय ।
एकादश्यां सिते पक्षे मधुना स्नापयेच्छिवम् ॥ ५ ॥
श्राद्ध तत्रैव यो भक्त्या पितृणामथ दापयेत् ।
स याति परम स्थान बलभद्रवचो यथा ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सङ्कर्षणतीर्थमाहात्म्यवर्णनं नामैकाधिकशततमोऽध्याय ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः

### मन्मथेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

मन्मथेश ततो गच्छेत्सर्वदेवनमस्कृतम् । स्नानमात्राच्चरो राजन्यमलोकं न पश्यति
अनपत्या या च नारी स्नायाद्देवं पाण्डुनन्दन । पुत्रसालभते पार्थ सत्यसन्धं दृढव्रतम्

तत्र स्नात्वा नरो राजञ्छुचि प्रयतमानस ।

उपोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३ ॥
कामेश्वरंतीर्थराजं तु नादृशं न भविष्यति । त्रिरात्रं कुरुते राजन् स गोलक्षफलं लभेत्
तत्र नृत्यं प्रकर्त्तव्यं तुष्यते परमेश्वरः । गीतवादित्रनिर्घोषैः रात्रौ जागरणेन च ॥
एतस्यां च महादेवो दृष्टोऽसि मन्मथेश्वरः ।
किं समर्था यमो दुष्टो भद्रो भद्राणि पश्यति ॥ ६ ॥
कामेन स्थापितः शम्भुस्तस्मात्कामदो नृप !।
सोपानः स्वर्गमार्गस्य पृथिव्यां मन्मथेश्वरः ॥ ७ ॥
विशेषश्चात्र सन्ध्यायां श्राद्धदाने च भारत । अन्नदानेन राजेन्द्र !कीर्त्तितं फलमुत्तमम्
एतत्ते सर्वमाख्यातं तव भक्त्या तु भारत !।
पृथिव्यां सागरान्तायां प्रख्यातो मन्मथेश्वरः ॥ ९ ॥
गोदानं पाण्डवश्रेष्ठ तस्यां प्रकारयेत् । चैत्रमासि सिते पक्षे तत्र गत्वा जितेन्द्रियः
रात्रौ जागरणं कृत्वा देवस्याग्रे नृपोत्तम !।
दीपं भक्त्या घृतेनैव देवस्याग्रे निवेदयेत् ॥ ११ ॥
स्त्र्यथवा पुरुषो वाऽपि सममेतत्फलं स्मृतम् ॥ १२ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मन्मथेश्वरतीर्थमाहात्म्यवर्णनं नाम
द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

— —

## एकाधिकशततमोऽध्यायः

### मण्डूरफलतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् । उत्तरे नर्मदाकूले यमपादस्य मध्यतः
मण्डूरफलमिति ख्यातं पृथिव्यां पापनाशनम् । तपर्षीणां पुरा राजन्मण्डूकेनात्र यै
गीयाणां अपि तत्रैव सन्निधौ नृपनन्दन । उमया सहितः शम्भुः स्थितस्तत्रैव केशव
यन्मण्डूरफलं सर्वप्राणिनामुपकारम् । स्नापयित्वा परया भक्त्या शङ्करं पापनाशनम्

यस्तत्र स्नाति वै भक्त्या जितक्रोधो जितेन्द्रियः ।
एकादश्यां सिते पक्षे मधुना स्नापयेच्छिवम् ॥ ५ ॥
श्राद्धं तत्रैव यो भक्त्या पितृणामथ दापयेत् ।
स याति परमं स्थानं यत्र ब्रह्मादयो यथा ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मण्डूरफलतीर्थमाहात्म्यवर्णनं नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः

### मन्मथेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

मन्मथेशं ततो गच्छेत्सर्वदेवनमस्कृतम् । स्नानमात्रान्नरो राजन्यमलोकं न पश्यति
अनपत्या या च नारी स्नायाद्वै पाण्डुनन्दन । पुत्रमाप्नोति सा पार्थ सत्यमेतन्मयोदितम्
तत्र स्नात्वा नरो राजञ्छुचिः प्रयतमानसः ।

पतन्तं रक्षयेद्विप्र महापातकिनं यदि। महाघोरे गता वापि दुष्कर्मपितामहाः ॥
तद्रन्ति सुपुत्राश्च वैतरण्यां गतानपि।
पुत्रेण लोकाञ्जयति पौत्रेण परमा गतिः ॥ १४ ॥
अथ पुत्रस्य पौत्रेण प्रगच्छेद् ब्रह्म शाश्वतम्।
नास्ति पुत्रसमो बन्धुरिह लोके परत्र च ॥ १५ ॥
अहश्चमध्यरात्रे च चिन्तयानस्यसर्वदा। शुष्यन्तिममगात्राणि ग्रीष्मेनक्षुद्रकंयथा

अनसूयोवाच

यत्त्वया शोचितं विप्र! तत्सर्वं शोधयाम्यहम्।
तवोद्वेगकरं यच्च तन्मे दहति चेतसि ॥ १७ ॥
येन पुत्रा भविष्यन्ति आयुष्मन्तो गुणान्विताः।
तत्कार्यं च समीक्षस्व येन तुष्येत्प्रजापतिः ॥ १८ ॥

अत्रिरुवाच

तपस्तप्तं मया भद्रे जातमात्रेण दुष्करम्। व्रतोपवासनियमैः शाकाहारेणसुन्दरि
क्षीणदेहस्तु तिष्ठामि ह्यशक्तोऽहंमहाव्रते। तेन शोचामिचात्मानंरहस्यंकथितंमया

अनसूयोवाच

भर्तुः पतिव्रतानारीरतिपुत्रविवर्धिनी। त्रिवर्गसाधनासाच श्लाघ्याचविदुषांजने
जपस्तपस्तीर्थयात्रा मृडेज्यामन्त्रसाधनम्।
देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ २२ ॥
ईदृशं तु महादोषं स्त्रीणां तु व्रतसाधने। वदन्ति मुनयः सर्वे यथोक्तं वेदभाषितम्
अनुज्ञाता त्वया ब्रह्मंस्तपस्तप्स्यामि दुष्करम्।
पुत्रार्थित्वं समुद्दिश्य तोषयामि सुरोत्तमान् ॥ २४ ॥

अत्रिरुवाच

साधुसाधु महाप्राज्ञे ममसन्तोषकारिणि। आज्ञाता त्वं महाभद्रेपुत्रार्थंतपआश्रय
देवतानां मनुष्याणां पितृणामनृणोभवे। नभार्यासदृशो बन्धुस्त्रिपुलोकेषुविद्यते

तेन देवाः प्रशंसन्ति न भार्यासदृशं सुखम् ।
सम्मुखे सम्मुखाः पुत्राः विलोमे तु पराङ्मुखाः ॥ २७ ॥
तेन भार्यां प्रशंसन्ति सदेवासुरमानुषाः । महावने महाघोरे सन्त्यजसि शुभेक्षणे
मयान्यस्य शीघ्रं त्वं पुत्रार्थं तु ममाज्ञया ।
एतद्वाक्यावसाने तु भार्याङ्ग प्रणताऽब्रवीत् ॥ २९ ॥
त्वत्प्रसादेन विप्रेन्द्र सर्वान्कामानवाप्नुयाम् ।
इमांल्लोकानि मा च मृगाक्षी वरवर्णिनी ॥ ३० ॥
नियमस्था ततो भूत्वा सम्प्राप्ता नर्मदां नदीम् ।
शिवस्यैवोद्भवां देवीं सर्वपापप्रणाशिनीम् ॥ ३१ ॥
यस्याश्च दर्शनमात्रेण नश्यते पापसञ्चयः । स्नानमात्रेण वै यस्या अश्वमेधफलं लभेत्
ये पिबन्ति महादेवि ! श्रद्दधाना पयः स्वयम् ।
स्नानपानेन तत्तुल्यं नाऽत्र कार्या विचारणा ॥ ३३ ॥
ये स्मरन्ति विचारार्ता यात्रायां नानागतैरपि । मुच्यन्ते सर्वपापेभ्यो रुद्रलोकं प्रयान्ति ते
नर्मदायाः समीपेषु तावुभौ यावनङ्घ्ये । न पश्यन्ति यमं तत्र ये मृगायतवर्णिनि
ततस्तत्तुरग कूले एरण्ड्याः सङ्गमे शुभे ।
नियमस्था विशालाक्षी शाकाहारेण सुन्दरि ! ॥ ३६ ॥
नापयन्ती शीघ्रं देवाऽस्मिन् स्तोत्रैर्व्रतैस्तथा ।
ग्रीष्मेषु च महादेवि ! पञ्चाग्निं साधयेत्सदा ॥ ३७ ॥
वर्षाकाले ह्याद्रवासाश्चीर्णचान्द्रायणानि च ।
हेमन्ते तु ततः प्राप्ते तोयमध्ये वसेत्सदा ॥ ३८ ॥
प्रातःस्नानं ततः सन्ध्यां कुशाद्भिर्पितृतर्पणम् । देवानामर्चनं कृत्वा होमं कुर्याद्यथाविधि
यजते वैन्दवांल्लोकान्ध्यानजाप्यहुतेन च । एवं वर्षशते प्राप्ते रुद्रविष्णुपितामहाः
सम्प्राप्ता द्विजरूपेण तु वेरण्ड्याः सङ्गमे प्रिये ! ।
पुनः संस्थितास्तस्या वेदमन्त्रमुदीरन्ति च ॥ ४१ ॥

अनसूया जपं त्यक्त्वा निरीक्ष्य तान्मुहुर्मुहुः ।
उत्थिता सा विशालाक्षी अर्घं दत्त्वा यथाविधि ॥ ४० ॥
अद्य में सफलं जन्म अद्य मे सफलं तपः । दर्शनेन तु विप्राणां सर्वपापैः प्रमुच्यते
प्रदक्षिणं ततः कृत्वा साष्टाङ्गं प्रणताऽब्रवीत् ।
कन्दमूलफलं शाकं नीवारानपि पावनान् ।
प्रयच्छाम्यहमद्यैव मुनीनां भावितात्मनाम् ॥ ४४ ॥

विप्रा ऊचुः

तपसा तु विचित्रेण तपःसत्येनसुव्रते । तृप्ताः स्म सर्वकामैस्तु सुव्रते तवदर्शनात्
अस्माकंकौतुकं जातंतापसेनव्रतेनय ३ । स्वर्गमोक्षसुतस्याऽर्थेतपस्तपसिदुष्करम्

अनसूयोवाच

तपसा सिध्यतेस्वर्गस्तपसापरमागतिः । तपसाचार्थकामौचतपसागुणवान्सुतः
तप एव च मे विप्राः सर्वकामफलप्रदम् ॥ ४७ ॥

विप्रा ऊचुः

तन्वी श्यामा विशालाक्षी स्निग्धाङ्गी रूपसंयुता ।
हंसलीलागतिगमा त्वं च सर्वाङ्गसुन्दरी ॥ ४८ ॥
किं च ते तपसा कार्यमात्मानं शोच्यसे कथम् ॥ ४६ ॥

अनसूयोवाच

यदिरुद्रश्च विष्णुश्च स्वयंसाक्षात्पितामहः । गूढरूपधराः सर्वे तच्चिह्नमुपलक्षये ॥
तस्या वाक्यावसाने तु स्वरूपं दर्शयन्ति ते ।
स्वस्वरूपैः स्थिता देवाः सूर्यकोटिसमप्रभाः ॥ ५१ ॥
चतुर्भुजो महादेवि! शङ्खचक्रगदाधरः । अतसीपुष्पवर्णस्तु पीतवासा जनार्द्दनः
गरुत्मान्वाहनं यस्यश्रियाचसहितोहरिः । प्रसन्नवदनःश्रीमान्स्वयंरूपोव्यवस्थितः
पीतवासा महादेवि! चतुर्वदनपङ्कजः । हंसोपरि समारूढो ह्यक्षमालाकरोद्यतः ॥
आगतो नर्मदातीरे ब्रह्मा लोकपितामहः ।

योऽसौ सर्वजगद्व्यापी स्वयं साक्षान्महेश्वरः ॥ ५५ ॥
वृषभ ॥ समारूढोदशबाहुसमन्वितः । भस्माङ्गरागशोभाढ्यः पञ्चवक्त्रस्त्रिलोचनः
जटामुकुटसंयुक्तः कृतचन्द्रार्धशेखरः । एवंरूपधरो देवः सर्वव्यापी महेश्वरः ॥ ५७
अनसूया निरीक्ष्यैतान्देवानां दर्शनं परम् । वेपमाना ततः साध्वीसुरान्दृष्ट्वा मुहुर्मुहुः
अनसूयोवाच
किंत्वापारस्वरूपास्तु विष्णुरुद्रपितामहाः । एतद्वेदितुमिच्छामि ह्यशरब्दयं तु मे
ब्रह्मोवाच
आवुफा गोप्ता ब्रह्मा आपश्चेव प्रकीर्तिता । मेघरूपो ह्यहं प्रोक्तोयथयामि च भूतले
अहं सर्वाणि बीजानि प्राकम्पव्यापृदिते रवौ ।
एतद्वै कारणं सर्वं रहस्यं कथितं परम् ॥ ६१ ॥
विष्णुरुवाच
हेमन्तश्च भवेद्विष्णुर्विश्वरूपधराधरम् । पालनाय ततस्सर्वं विष्णोर्माहात्म्यमुत्तमम्
रुद्र उवाच
ग्रीष्मकालोह्यहं प्रोक्तः सर्वभूतक्षयङ्करः । कथयामि च तत्सर्वं रुद्ररूपस्तपस्विनि
एवं ब्रह्मा च विष्णुश्चरुद्रश्चैवमहाव्रते । त्रयोदेवास्त्रयः सन्ध्यास्त्रयः कालास्त्रयोऽग्नयः
तथा ब्रह्मा च विष्णुश्च रुद्रश्चैकात्मतां गतः ।
वरोऽस्तु ते भद्रे यस्त्वया मनसेप्सितम् ॥ ६० ॥
अनुसूयोवाच
धन्या पुण्या ह्यहं लोके श्लाघ्या धन्या च सर्वदा ।
ब्रह्मा विष्णुश्च रुद्रश्च प्रसन्नवदना शुभा ॥ ६ ॥
यदि तुष्टास्त्रयो देवा दया कृत्वा ममोपरि ।
अस्मिंस्तीर्थे तु सान्निध्याद्भवतां भवतु मे सदा ॥ ६७ ॥
रुद्र उवाच
एवं भवतु ते वाक्यं यत्त्वयाप्रार्थितं शुभे । त्र्यम्बकावैष्णवीमायाएरण्डीनामनामतः

यस्यादर्शनमात्रेण नश्यतेपापसञ्चयः। चैत्रमासे तु सम्प्राप्तेअहोरात्रोषितो भवेत्
एरण्ड्याः सङ्गमे स्नात्वा ब्रह्महत्यां व्यपोहति।
रात्रौ जागरणं कुर्यात्प्रभाते भोजयेद् द्विजान् ॥ ७० ॥
यथोक्तेनविधानेनपिण्डंदद्याद्यथाविधि। प्रदक्षिणां ततो दद्याद्धिरण्यं वस्त्रमेव च
रजतं च तथा गावो भूमिदानमथाऽपिवा।
सर्वं कोटिगुणं प्रोक्तमिति स्वायम्भुवोऽब्रवीत् ॥ ७२ ॥
ये म्रियन्ति नरा देवि! एरण्ड्याः सङ्गमे शुभे। यावद्युगसहस्रंतु रुद्रलोकेवसन्ति ते
अहोरात्रोषितो भूत्वा जपेद्रुद्रांश्च वैदिकान्।
एकादशैकसञ्ज्ञांश्च स याति परमां गतिम् ॥ ७४ ॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।
पुत्रार्थी लभते पुत्राँल्लभेत्कामान्यथेप्सितान् ॥ ७५ ॥
एरण्ड्याः सङ्गमे स्नात्वा रेवाया विमले जले।
महापातकिनो वाऽपि ते यान्ति परमां गतिम् ॥ ७६ ॥

अनसूयोवाच

यदितुष्टास्त्रयोदेवा मम भक्तिप्रचोदिताः। मम पुत्रा भवन्त्वेव हरिरुद्रपितामहाः

विष्णुरुवाच

पूज्या यत्पुत्रतां यान्ति न कदाचिच्छ्रुतं मया।
शुभे ददामि पुत्रांस्ते देवतुल्यपराक्रमान्। रूपवन्तो गुणोपेतान्यज्विनश्चबहुश्रुतान्

अनसूयोवाच

ईप्सितंतच्च दातव्यं यन्मया प्रार्थितंहरे!। नान्यथाचैव कर्त्तव्याममपुत्रैषणा तु या

विष्णुरुवाच

पूर्वं तु भृगुसम्वादे गर्भवासउपार्जितः।। तस्याहं नैवपारंतु नैव पश्यामि शोभने
स्मरमाणः पुरावृत्तं चिन्तयामि पुनः पुनः। एवंसञ्चिन्त्यतेदेवाः पितामहमहेश्वराः
अयोनिजाभविष्यामस्तव पुत्रा वरानने!। योनिवासेमहाप्राज्ञिदेवानैवव्रजन्तिच

सान्निध्यात्सङ्गमे देवि लोकानां तु वरप्रदा ।
वरण्डी वैष्णवी माया प्रत्यक्षा त्वं भविष्यसि ॥ ८३ ॥
त्रयो देवा स्थिता पार्थ रेवाया उत्तरे तटे ।
वरप्राप्ता तु सा देवी गता माहेन्द्रपर्वतम् ॥ ८४ ॥

क्षीणाङ्गीशुष्कदेहा च रूक्षकेशा सुदारुणा । कृतयज्ञोपवीतासातपोनिष्ठाशुभेक्षण

शिलातलनिषण्णोऽसौ दृष्ट कान्तो महायशा ।
दृष्ट्वर्षिसोऽमथदेवि उत्तिष्ठोत्तिष्ठ साऽऽब्रवीत् ॥ ८६ ॥

अत्रिरुवाच

साधुसाधु महाप्राज्ञे ह्यनसूये महाव्रते ।
अचिन्त्य गालवादीनां वर प्राप्ताऽसि दुर्लभम् ॥ ८७ ॥

अनसूयोवाच

त्वत्प्रसादेनदेवर्षे वरप्राप्तास्मिदुर्लभम् । तेनदेवाः प्रशसन्ति सिद्धाश्चऋषयोऽमला
एवमुक्ता तु सा देवी हर्षेण महता युता । आलोकयेतत कान्तेनाऽपि शुभदर्शना
ईक्षणाच्चैव सभात ललाटे मण्डल शुभम् । नवयोजनसाहस्रमण्डलरश्मिभिवृतम
कदम्बगोलकाकारंत्रिगुण परिमण्डलम् । तस्यमध्ये तु देवेशि पुरुषोदिव्यरूपधृक्
हेमवर्णोऽमृतमय सूर्यकोटिसमप्रभ । आद्य पुत्रोऽनुसूयाया स्वयंसाक्षात्पितामह

चन्द्रमा इतिविख्यात सोमरूपो नृपात्मज ।
इष्टापूर्त च सम्पाति कलाषोडशकेन ॥ ९३ ॥
प्रतिपच्च द्वितीया च तृतीया च महेश्वरि ।
चतुर्थी पञ्चमी चैव अव्यया षोडशी कला ॥ ९४ ॥
चतुर्विधस्य लोकस्य सूक्ष्मो भूत्वा वरानने ।
आप्रीणाति जगत्सर्वं त्रैलोक्य सचराचरम् ॥ ९५ ॥

सर्वे ते हृत पजीवन्ति हुत दत्त शशिस्थितम् । वनस्पतिगतेसोमे वनवाश्च वरानने
गुञ्जपरगृहे मृदो दहेद्दृष्कृत शुभम् । वनस्पतिगते सोमे यस्तु छिन्द्याद्वनस्पतीन्

तेन पापेन देवेशि! नरा यान्ति यमालयम् ॥ ९७ ॥

वनस्पतिगते सोमे मैथुनं यो निषेवते । ब्रह्महत्यासमं पापं लभते नाऽत्र संशयः ॥

वनस्पतिगते सोमे मन्थानं योऽधिवाहयेत् ।

गावस्तस्य प्रणश्यन्ति याश्च वै पूर्वसञ्चिताः ॥ ९९ ॥

वनस्पतिगते सोमे ह्यध्वानं योऽधिगच्छति ।

भवन्ति पितरस्तस्य तं मासं रेणुभोजनाः ॥ १०० ॥

अमावास्यां महादेवि! यस्तु श्राद्धप्रदो भवेत् ।

अब्दमेकं विशालाक्षि! तृप्तास्तत्पितरो ध्रुवम् ॥ १०१ ॥

हिरण्यं रजतं वस्त्रं यो ददाति द्विजातिषु । सर्वलक्षगुणं देवि लभते नाऽत्रसंशयः

एवं गुणविशिष्टोऽसौ सोमरूपः प्रजापतिः । सञ्जातःप्रथमःपुत्रो ह्यनसूयासुनन्दनः

द्वितीयस्तुमहादेविदुर्वासानामनामतः । सृष्टिसंहारकर्त्ता च स्वयंसाक्षान्महेश्वरः

अग्निमध्यगतोदेवितपस्तपतिदुष्करम् । सोऽपि रुद्रत्वमायातिसम्प्राप्तेभूतविप्लवे

इन्द्रोऽपि शप्तस्तेनैव दुर्वाससा वरानने !।

द्वितीयस्य तु पुत्रस्य सम्भवः कथितो मया ॥ १०६ ॥

दत्तात्रेयस्वरूपेण भगवान्मधुसूदनः । जयद्व्यापी जगन्नाथः स्वयंसाक्षाज्जनार्द्दनः

एते देवास्त्रयः पुत्रा अनसूयाया महेश्वरि । वरदानेन ते देवा ह्यवतीर्णा महीतले

पुत्रप्राप्तिकरंतीर्थं रेवायाश्चोत्तरे तटे । अनसूयाकृतं पार्थ ! सर्वपापक्षयं परम् ॥

श्रीमार्कण्डेय उवाच

आश्चर्यभूतं लोकेऽस्मिन्नर्मदायां पुरातनम् ।

भ्रूणहत्या गतास्तत्र ब्राह्मणस्य नराधिप !॥ ११० ॥

युधिष्ठिर उवाच

इतिहासं द्विजश्रेष्ठ कथयस्व ममाऽनघ । सर्वपापहरंलोके दुःखार्त्तस्यचकथ्यताम्

श्रीमार्कण्डेय उवाच

सुवर्णशिलके ग्रामे गौतमान्वयसम्भवः । कपीवलो महादेवि! भार्यापुत्रसमन्वितः

अपुत्रस्य गृहं शून्यं दिशः शून्या ह्यबान्धवाः ।
मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता ॥ १२८ ॥

मृगाऽयं वदतेलोकश्चन्दनंकिल शीतलम् । पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः
श्मश्रुग्रहणक्रीडन्तंधूलिधूसरिताननम् पुण्यहीनानपश्यन्तिनिजोत्सङ्गसमास्थितम्

दिगम्बरं गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्यहीना न पश्यन्ति गङ्गाधरमिवात्मजम् ॥ १३१
वीणावाद्यस्वरो लोके सुस्वरः श्रूयते किल ।
रुदितं बालकस्यैव तस्मादाह्लादकारकम् ॥ १३२ ॥

मृगपक्षिषु काकेषु पशूनां स्वरयोनिषु । पुत्रं तेषु समस्तेषु वल्लभं ब्रुवते बुधाः ॥

मत्स्याश्चप्रकाराश्चैव कूर्मग्राहादयोऽपि वा ।
पुत्रोत्पत्तौ च हृष्यन्ति विपत्तौ यान्ति दुःखिताम् ॥ १३४ ॥

देवगन्धर्वयक्षाश्च हृष्यन्तेपुत्रजन्मनि । पश्चत्वेतेऽपिशोचन्तिमन्दभाग्योऽस्मिपुत्रक
ऋषिमेलापकं चक्रे पुत्रार्थं राघवो नृप । इन्द्रस्थानेस्थितस्तस्यप्रोक्षतेह्यासनंयतः

स्वर्गवासं सुताद्बाह्यं विद्यते न तु पाण्डव ॥
चक्रे दशरथस्तस्मात्पुत्रार्थं यज्ञमुत्तमम् ॥ १३७ ॥
रामोलक्ष्मणशत्रुघ्नौ भरतस्तत्र सम्भवात् ।
कार्त्तवीर्यो जितो येन रामेणाऽमिततेजसा ॥ १३८ ॥

स रामो रामचन्द्रेण अष्टवर्षेण निर्जितः । एकाकिनाहतोवाली प्लवगः शत्रुदुर्जयः
रावणो ब्रह्मपुत्रो यत्त्रैलोक्यं यस्य शङ्कते । हतः स रामचन्द्रेण सपुत्रःसहबान्धवः

एवं पुत्रं विना सौख्यं मर्त्यलोके न विद्यते ।
वंशार्थे मैथुनं यस्य स्वर्गार्थे यस्य भारती ॥ १४१ ॥
मृष्टान्नं ब्राह्मणस्यार्थे स्वर्गे वासं तु यान्ति ते ।
ब्रह्महत्याश्वमेधाभ्यां न परं पापपुण्ययोः ॥ १४२ ॥
पुत्रोत्पत्तिविपत्तिभ्यां न परं सुखदुःखयोः ।

किं ब्रवीमीति भो वत्स' न तु सौख्य सुत विना ॥ १४२ ॥

एव बहुविध दुःख प्रलपित्वापुन पुन । जनैश्चाश्वासितोविप्रो बालगृहाद्बहिर्गत
तत संस्कृत्य त बाल विधिदृष्टेनकर्मणा । समवेतोतुदुःखार्त्तोवागतोस्वगृहं पुन
स्वगृहागते विप्रेन्द्रे निर्जाता युधिष्ठिर । भूमौ प्रसुप्तो गोविन्द पुत्रशोकेनपीडित

यावन्निरीक्षते भार्या भर्त्तार तु सुपीडितम् ।
कृमिराशिगत सर्वं गोविन्द समपश्यत ॥ १४७ ॥
दुःखाद् दुःखतरे मग्ना दृष्ट्वा त पातकान्वितम् ।
एव दुःखनिमग्नाया शर्वरी विगता तदा ॥ १४८ ॥
पशुपालस्तु महिषीं मुक्त्वाऽरण्येऽगमद् गृहात् ।
अरण्ये महिषीं सदा रक्षयित्वा गृहागतः ॥ १४९ ॥
विज्ञप्त पशुपालेन गोविन्दो ब्राह्मणोत्तम ।
यावद्दोह्याम्यह स्वामिन्महिषीस्तनं च रक्ष से ॥ १५० ॥

तत सत्वरितोविप्रोगत्वाममहिषी प्रति । ततश्चमहिषीपश्येत्पश्चात्क्षेत्राभिसन्मुखम्
धावमानश्च विप्रन्तु परण्डीमद्रुमे गत । तत प्रविष्टस्तुमले रथैरण्डपोस्तुसगमे

तज्जल पीतमात्र तु त्वरया वातितर्षित ।
अकामात्सलिले पीत्वा प्रक्षाल्य नयने शुभे ॥ १५३ ॥

आचगामतत पश्चाद्वनदिवसक्षये । भुक्त्वादन्नान्वितोरात्रौगोविन्दःशयनयौ
निद्राभिभूत शोकेन धर्मेणैवमुखेदित । पुनस्तत्रार्धरात्रे तु तस्य भार्यायुधिष्ठिर

कृमिभिर्वेष्टित गात्र क्वचित्पश्यत्यवेष्टितम् ।
पुन सा विस्मयाऽविष्टा तस्य भार्या गुणान्विता ॥
उवाच दुःखेन तस्य साध्वमाविष्टचेतसा ॥ १५५ ॥

भार्योवाच

अनेनैपश्रमेघाहित्विन्धनक्षिपतस्तुते । गृहपश्चाद्गतावालो ह्यज्ञानाद्वातितस्त्वया

मया तत्पातक घोर रहस्य न प्रकाशितम् ।

तेन प्रच्छन्नपापेन दह्यमाना दिवानिशम् ॥ १५८ ॥
न सुखं तव गात्रस्य पश्यामि न हि चात्मनः ।
निद्रा मम शमं याता रतिश्चैव त्वया सह ॥ १५६ ॥
श्रूयते मानवे शास्त्रे श्लोको गीतो महर्षिभिः ।
स्मृत्वा स्मृत्वा तु तं चित्ते परितापो न शाम्यति ॥ १६० ॥
कीर्त्तनान्नश्यते धर्म्मो वर्धतेऽसौ निगूहनात् ।
इह लोके परे चैव पापस्याऽप्येवमेव च ॥ १६१ ॥
एवं सञ्चित्यमानाऽहं स्थिता रात्रौ भयातुरा ।
कृमिराशिगतं त्वां हि कस्याऽहं कथयामि किम् ॥ १६२ ॥
पुनस्त्वंचाऽद्यमेदृष्टोभ्रूणहत्याकृमिश्रितः । कश्चिद्भिन्दन्तितेगात्रंकश्चिन्नष्टाःसमन्ततः
एतत्संस्मृत्य संस्मृत्य विमृशामि पुनः पुनः ।
न जाने कारणं किञ्चित्पृच्छन्त्याः कथयस्व मे ॥ १६४ ॥
तडागं वा सरिद्वाऽपि तीर्थं वा देवतार्चनम् ।
यं गतोऽसि प्रभावोऽयं तस्य नाऽन्यस्य मे स्थितम् ॥ १६५ ॥
एवमुक्तस्तुविप्रोऽसौकथयामास भारत । भार्याया यद्दिवावृत्तं शङ्कमानोनृपोत्तम
अद्य! महिषीसार्थंएरण्डीसङ्गमं गतः । नाभिमात्रे जले गत्वापीतवान्सलिलंबहु
नान्यत्तीर्थं विजानामि सरितं सर एव वा ।
सत्यं सत्यं पुनः सत्यं कथितं तव भामिनि !॥ १६८ ॥
एवं ज्ञात्वा सा सर्वमुपवासकृतक्षणा । सपत्नीको गतस्तत्र सङ्गमे वरवर्णिनि !॥
स्नात्वा तत्र जले रम्ये नत्वा देवं तु भास्करम् ।
स्नापयामास देवेशं शङ्करं चोमया सह ॥ १७० ॥
पञ्चगव्यघृतक्षीरैर्दधिक्षौद्रकृतैर्जलैः । गन्धमाल्यादिधूपैश्च नैवेद्यैश्च सुशोभनैः ॥
पूज्यत्रयीमयंलिङ्गं देवींकात्यायनींशुभाम् । रात्रौजागरणंकृत्वापत्यासहपतिव्रता
ततः प्रभाते विमले द्विजान्सम्पूज्य यत्नतः । गोदानेन हिरण्येन वस्त्रेणान्नेन भारत

पुत्रार्थं याः स्त्रियःपार्थ! ह्येरण्डीसङ्गमे नृप। स्नाप्यन्तेरुद्रसूक्तैश्चचतुर्वेदोद्भवैस्तथा

चतुर्भिर्ब्राह्मणैःशस्तं ह्याभ्यां योग्यैश्च कारयेत्।

एकेन सार्द्रकुम्भेन दाम्पत्यमभिषेचयेत्॥ १६०॥

देवज्ञेनैव चैकेन अथवा सामगेन वा। पञ्चरत्नसमायुक्तं कुम्भे तत्रैव कारयेत्॥

गन्धतोयसमायुक्तं सर्वौषधिविमिश्रितम्। आम्रपल्लवसंयुक्तमश्वत्थमधुकं तथा

गुण्ठितं सितवस्त्रेणसितचन्दनचर्चितम्। सितपुष्पैस्तुसंछन्नंसिद्धार्थकृतमध्यमम्

कांस्यपात्रे तु संस्थाप्य पुत्रार्थी देशिकोत्तमः।

अङ्गलग्नं तु तद्वस्त्रं कटकाभरणं तथा॥ १६४॥

तत्सर्वं मण्डले त्याज्यं सिद्ध्यर्थं चात्मनस्तदा।

प्रणम्य भास्करं पश्चादाचार्यं रुद्ररूपिणम्॥ १६५॥

मधुरं च ततोऽश्नीयाद्देव्याभुवनउत्तमे। फलदानं च विप्राय छत्रं ताम्बूलमेव च

उपानहौ च यानंचसभवेद्दुःखवर्जितः। भास्करे क्रीडतेलोकेयावदाभूतसम्प्लवम्

दानं कोटिगुणं सर्वं शुभं वा यदि वाऽशुभम्।

यथानदीनदाः सर्वे सागरे यान्ति सङ्क्षयम्॥ १६८॥

एवं पापानिनश्यन्तिह्येरण्डीसङ्गमेनृणाम्। समन्ताच्छस्त्रपातेनह्येरण्डीसङ्गमेनृप

भ्रूणहत्यासमं पापं नश्यते शङ्करोऽब्रवीत्।

प्राणत्यागं च यो भक्त्या जातवेदसि कारयेत्॥ २००॥

अनाशकं नृपश्रेष्ठ! जले वा तदनन्तरम्। पञ्चसाहस्रिकं मानं वर्षाणां जातवेदसि

जलेत्रीणिसहस्राण्यनाशकेषष्टिभुञ्जते। काकावकाःकपोताश्चह्युलूकाःपशवस्तथा

सङ्गमोदकसंस्पृष्टास्ते यान्ति परमां गतिम्।

वृक्षाश्च तत्पदं ज्ञात्वा यां गतिं यान्ति योगिनः॥ २०३॥

एरण्डिका मया देवी दृष्टो मे मन्मथेश्वरः। किंसमर्थोयमोरुष्टोभद्रोभद्राणिपश्यति

मृत्तिकां सङ्गमोद्भूतां ये च गुण्ठन्ति नित्यशः।

भ्रूणहत्यादि पापानि नश्यन्ते नाऽत्र संशयः॥ २०५॥

ततः स्वर्गावतीर्णस्तु जायते विशदे कुले ।
धनधान्यसमोपेतः पुनः स्मरति तज्जलम् ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सुवर्णशिलातीर्थमाहात्म्यवर्णनंनामचतुरधिकशततमोऽध्यायः ॥

---

## पञ्चाधिकशततमोऽध्यायः

### करञ्जतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

करञ्जाख्ये ततो गच्छेत्सोपवासो जितेन्द्रियः ।
तत्र स्नात्वा तु राजेन्द्र! सर्वपापैः प्रमुच्यते ॥ १ ॥

अर्चयित्वामहादेवंदत्त्वादानंतुभक्तितः । सुवर्णंरजतंवाऽपि मणिमौक्तिकविद्रुमान्
पादुकोपानहौ छत्रं शय्यां प्रावरणानि च । कोटिकोटिगुणंसर्वंजायतेनात्रसंशयः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेकरञ्जतीर्थमाहात्म्यवर्णनंनाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

## षडधिकशततमोऽध्यायः

### कामदतीर्थमाहात्म्यवर्णनम्

ततो गच्छेन्महीपाल तीर्थं परमशोभनम् । सौभाग्यकरणंदिव्यं नरनारीमनोरमम्
तत्रयादुर्भगानारीनरोवा नृपसत्तम । स्नात्वाऽर्चयेदुमारुद्रौसौभाग्यंतस्यजायते
तृतीयायामहोरात्रं सोपवासो जितेन्द्रियः ।

तेन धारयितव्या वै प्राणायामास्तु षोडश ॥ ३५ ॥

दिवास्वप्ने त्रिरात्रं स्यात्प्राणायामशतत्रयम् । एकान्ते मधुमांसे च नवश्राद्धे तथैव च
प्रत्यक्षलवणे प्रोक्तं प्राजापत्यं विशोधनम् ॥ ३६ ॥

ध्याननिष्ठस्य सततं नश्यते सर्वपातकम् । तस्मान्महेश्वरं ज्ञात्वा तद्ध्यानपरमो भवेत्
यद्ब्रह्मपरमं ज्योतिः प्रतिष्ठाक्षरमव्ययम् । योऽन्तरापरमं ब्रह्म स विज्ञेयो महेश्वरः
एष देवो महादेवः केवलः परमः शिवः । तदेवाक्षरमद्वैतं तदादित्यान्तरं परम् ॥

यस्मान्महीयसो देवः स्वधाम्नि ज्ञानसंस्थिते ।
आत्मयोगाह्वये तत्त्वे महादेवस्ततः स्मृतः ॥ ४० ॥

नान्यं देवं महादेवाद्व्यतिरिक्तं प्रपश्यति । तमेवात्मानमात्मेति यः स याति परमं पदम्
मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् ।
न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः ॥ ४२ ॥

एकमेव परं ब्रह्म विज्ञेयं तत्त्वमव्ययम् । स देवस्तु महादेवो नैतद्विज्ञाय बाध्यते ।
तस्माद्यतेत नियतं यतिः संयतमानसः । ज्ञानयोगरतः शान्तो महादेवपरायणः ।
एष वः कथितो विप्रा यतीनामाश्रमः शुभः । पितामहेन विभुना मुनीनां पूर्वमीरितम्
नाऽस्य शिष्यस्य यागिभ्यो दद्यादिदमनुत्तमम् ।
ज्ञानं स्वयम्भुवा प्रोक्तं यतिधर्माश्रयं शिवम् ॥ ४५ ॥

इति यतिनियमानामेतदुक्तं विधानं पशुपतिपरितोषे यद्भवेदेकहेतु ।
न भवति पुनरेषामुद्भवो वा विनाशः प्रणिहितमनसा ये नित्यमेवाचरन्ति ॥ ४६

इति श्रीकूर्म्ममहापुराणे उत्तरार्द्धे व्यासगीतासु यतिधर्मवर्णनं
नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

# त्रिंशोऽध्यायः

## प्रायश्चित्तविधिवर्णनम्

व्यास उवाच

तःपरं प्रवक्ष्यामि प्रायश्चित्तविधिंशुभम् । हिताय सर्वविप्राणां दोषाणामपनुत्तये

अकृत्वा विहितं कर्म्म कृत्वा निन्दितमेव च ।
दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥ २ ॥

प्रायश्चित्तमकृत्वा तु न तिष्ठेद्ब्राह्मणः क्वचित् ।
यद्ब्रूयुर्ब्राह्मणाः शान्ता विद्वांसस्तत्समाचरेत् ॥ ३ ॥

वेदार्थवित्तमः शान्तो धर्म्मकामोऽग्निमान्द्विजः ।
स एव स्यात्परो धर्म्मो यमेकोऽपि व्यवस्यति ॥ ४ ॥

अनाहिताग्नयो विप्रास्त्रयो वेदार्थपारगाः । यद्ब्रूयुर्धर्मकामांस्ते तज्ज्ञेयं धर्मसाधन

अनेकधर्मशास्त्रज्ञा ऊहापोहविशारदाः । वेदाध्ययनसम्पन्नाः सप्तैते परिकीर्त्तित

मीमांसाज्ञानतत्त्वज्ञा वेदान्तकुशला द्विजाः ।
एकविंशतिविख्याताः प्रायश्चित्तं वदन्ति वै ॥ ७ ॥

ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च । महापातकिनस्त्वेते यश्चैतैः सह सम्विश

सम्वत्सरन्तु पतितैः संसर्गंकुरुते तु यः । यानशय्यासनैर्नित्यं जानन्वै पतितोभ

याजनं योनिसम्बन्धं तथैवाध्यापनं द्विजः । सद्यः कृत्वा पतत्येव सह भोजनमेव

अविज्ञायाथ यो मोहात्कुर्यादध्यापनं द्विजः । सम्वत्सरेण पतति सहाध्ययनमेव

ब्रह्महाद्वादशाब्दानिकुटिंकृत्वावनेवसेत् । भैक्षमात्मविशुद्ध्यर्थंकृत्वाशवशिरोध्वं

ब्राह्मणावसथान् सर्वान् देवागाराणि वर्ज्जयेत् ।
विनिन्दन् स्वयमात्मानं ब्राह्मणं तञ्च संस्मरन् ॥ १३ ॥

असङ्कल्पितयोग्यानि सप्तागाराणिसम्विशेत् । विधूमेशनकैर्नित्यंव्यङ्गारेभुक्तवज

एककालं चरेद्भैक्षं दोषं विख्यापयन्नृणाम् । वन्यमूलफलैर्वापि वर्त्तयेद्वै समाश्रितः
कपालपाणिः खट्वाङ्गी ब्रह्मचर्यपरायणः । पूर्णे तु द्वादशे वर्षे ब्रह्महत्यां व्यपोहति
अकामतः कृते पापे प्रायश्चित्तमिदं शुभम् ।
कामतो मरणाच्छुद्धिर्ज्ञेया नान्येन केनचित् ॥ १७ ॥
कुर्यादनशनं वाथ भृगोः पतनमेव वा । ज्वलन्तं वा विशेदग्निं जलं वा प्रविशेत् स्वयम्
ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत् ।
ब्रह्महत्यापनोदार्थमन्तरा वा मृतस्य तु ॥ १९ ॥
दीर्घामयाविनं विप्रं कृत्वानामयमेव वा । दत्त्वा चान्नं सुविदुषे ब्रह्महत्यां व्यपोहति
अश्वमेधावभृथके स्नात्वा वै शुध्यते द्विजः । सर्वस्वं वा वेदविदे ब्राह्मणाय प्रदाय तु
सरस्वत्यास्त्वरुणया सङ्गमे लोकविश्रुते ।
शुध्येत्त्रिषवणस्नानात्त्रिरात्रोपोषितो द्विजः ॥ २२ ॥
गत्वा रामेश्वरं पुण्यं स्नात्वाथ च महोदधौ । ब्रह्मचर्यादिभिर्युक्तो दृष्ट्वा रुद्रं विमोचयेत्
कपालमोचनं नाम तीर्थं देवस्य शूलिनः ।
स्नात्वाभ्यर्च्य पितॄन् देवान् ब्रह्महत्यां व्यपोहति ॥ २४ ॥
यत्र देवाधिदेवेन भैरवेणामितौजसा । कपालं स्थापितं पूर्वं ब्रह्मणः परमेष्ठिनः ॥
समभ्यर्च्य महादेवं तत्र भैरवरूपिणम् । तर्पयित्वा पितॄन् स्नात्वा मुच्यते ब्रह्महत्यया

इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु ब्रह्महत्यायाः प्रायश्चित्तवर्णनं
नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

# एकत्रिंशोऽध्यायः

## ब्रह्मणःकपालस्थापनवर्णनम्

ऋषय ऊचुः

कथं देवेन रुद्रेण शङ्करेणातितेजसा। कपालं ब्रह्मणः पूर्वं स्थापितं देहजम्भुवि ॥

सूत उवाच

शृणुध्वमृषयःपुण्यांकथां पापप्रणाशिनीम्। माहात्म्यं देवदेवस्यमहादेवस्यधीमतः
पुरा पितामहं देवं मेरुशृङ्गे महर्षयः। प्रोचुः प्रणम्य लोकादिंकिमेकं तत्त्वमव्ययम्
समाययामहेशस्य मोहितो लोकसम्भवः। अविज्ञायपरम्भावंस्वात्मानंप्राहधर्षिणम्
अहंधाता जगद्योनिः स्वयम्भूरेक ईश्वरः। अनादि मत्परं ब्रह्म मामभ्यर्च्यविमुच्यते
अहं हि सर्वदेवानां प्रवर्त्तकनिवर्त्तकः। न विद्यते चाभ्यधिकोमत्तो लोकेषु कश्चन
तस्यैवंमन्यमानस्यजज्ञे नारायणांशजः। प्रोवाचप्रहसन्वाक्यं रोषितोऽयंत्रिलोचनः
किं कारणमिदं ब्रह्मन्वर्त्तते तव साम्प्रतम्। अज्ञानयोगयुक्तस्य न त्वेतत्त्वयि विद्यते
अहंकर्त्तादिलोकानांयज्ञे नरायणात्प्रभोः। न मामृतेऽस्यजगतो जीवनंसर्वथाक्वचित्
अहमेव परं ज्योतिरहमेव परा गतिः। मत्प्रेरितेन भवता सृष्टं भुवनमण्डलम् ॥
एवं विवदतोर्मोहात्परस्परजयैषिणोः। आजग्मुर्यत्र तौ देवौ वेदाश्चत्वार एव हि
अन्वीक्ष्यदेवं ब्रह्माणंयज्ञात्मानञ्चसंस्थितम्। प्रोचुःसंविग्नहृदया याथात्म्यंपरमेष्ठिनः

ऋग्वेद उवाच

यस्यान्तःस्थानि भूतानि यस्मात्सर्व्वं प्रवर्त्तते।
यदाहुस्तत्परं तत्त्वं स देवः स्यान्महेश्वरः ॥ १३ ॥

यजुर्वेद उवाच

यो यज्ञैरखिलैरीशो योगेन च समर्च्यते। यमाहुरीश्वरं देवं स देवःस्यात्पिनाकधृक्

सामवेद उवाच

येनेदम्भ्राम्यते विश्वं यदाकाशान्तरं शिवम् । योगिभिर्विद्यते तत्त्वमहादेवः सशङ्करः

अथर्ववेद उवाच

यम्प्रपश्यन्ति देवेशं यजन्ते यतयः परम् । महेशं पुरुषं रुद्रं स देवो भगवान् भवः

एवं स भगवान्ब्रह्मा वेदानामीरितं शुभम् । श्रुत्वा विहस्य विश्वात्मा ततश्चाह विमोहितः

कथं तत्परमं ब्रह्म सर्वसङ्गविवर्जितम् । रमते भार्यया सार्द्धं प्रमथैश्चातिगर्वितैः ॥ १८॥

इतीरितेऽथ भगवान्प्रणवात्मा सनातनः । अमूर्त्तो मूर्त्तिमान्भूत्वा वचः प्राह पितामहम्

प्रणव उवाच

न ह्येष भगवानीशः स्वात्मनो व्यतिरिक्तया । कदाचिद्रमते रुद्रस्तादृशो हि महेश्वरः

अयं स भगवानीशः स्वयंज्योतिः सनातनः ॥ २० ॥

स्वानन्दभूता कथिता देवी आगन्तुका शिवा ॥ २१ ॥

इत्येवमुक्तेऽपि तदा यज्ञमूर्त्तेरजस्य च । नाज्ञानमगमन्नाशमीश्वरस्यैव मायया ॥ २२ ॥

तदन्तरे महाज्योतिर्विरिञ्चो विश्वभावनः । प्रापश्यदद्भुतं दिव्यम्पूरयन् गगनान्तरम्

तन्मध्यसंस्थितं ज्योतिर्मण्डलं तेजसोज्ज्वलम् ।

व्योममध्यगतं दिव्यं प्रादुरासीद् द्विजोत्तमाः ॥ २४ ॥

स दृष्ट्वा वदनं दिव्यमूर्ध्नि लोकपितामहः । तैजसं मण्डलं घोरमालोकयदनिन्दितः

प्रजज्वालातिकोपेन ब्रह्मणः पञ्चमं शिरः । क्षणादपश्यत्स महान् पुरुषं नीललोहितम्

त्रिशूलपिङ्गलो देवो नागयज्ञोपवीतवान् । तं प्राह भगवान् ब्रह्मा शङ्करं नीललोहितम्

जानामि पूर्वं भवतो ललाटादद्य शङ्करम् । प्रादुर्भूतं महेशानं मामतः शरणं व्रज ॥ २८ ॥

श्रुत्वा सगर्ववचनं पद्मयोनेरथेश्वरः । प्राहिणोत्पुरुषं कालं भैरवं लोकदाहकम् ॥ २९ ॥

स कृत्वा सुमहद्युद्धं ब्रह्मणा कालभैरवः । चकर्त्तास्य वदनं विरिञ्चस्याथ पञ्चमम्

निकृत्तवदनो देवो ब्रह्मा देवेन शम्भुना । ममार चेशो योगेन जीवितं प्राप विश्वसृक्

अथान्वपश्यद्गिरिशं मण्डलान्तरसंस्थितम् । समासीनं महादेव्या महादेवं सनातनम्

भुजङ्गराजवलयं चन्द्रावयवभूषणम् । कोटिसूर्यप्रतीकाशं जटाजूटविराजितम् ॥ ३३ ॥

शार्दूलचर्मवसनं दिव्यमालासमन्वितम् ।

त्रिशूलपाणिं पुरुषं योगिनं भूतिभूषणम् ॥ ३४ ॥
यमन्तरा योगनिष्ठाः प्रपश्यन्ति हृदीश्वरम् । तमादिमेकं ब्रह्माणं महादेवं ददर्श ह ॥
यस्य सा परमा देवी शक्तिराकाशसंस्थिता ।
सोऽनन्तैश्वर्ययोगात्मा महेशो दृश्यते किल ॥ ३६ ॥
यस्याशेषजगद्बीजं विलयं याति मोहनम् । सकृत्प्रणाममात्रेण स रुद्रः खलु दृश्यते
योऽथ नाचारनिरतास्तद्भक्तानेव केवलम् । विमोचयति लोकात्मा नायको दृश्यते किल
यस्य ब्रह्मादयो देवा ऋषयो ब्रह्मवादिनः । अर्चयन्ति सदा लिङ्गं स शिवः खलु दृश्यते
यस्याशेषजगत्सूतिर्विज्ञानतनुरीश्वरः । न मुञ्चति सदा पार्श्वं शङ्करोऽसौ स दृश्यते
विद्यासहायो भगवान्यस्यासौ मण्डलान्तरम् । हिरण्यगर्भपुत्रोऽसावीश्वरो दृश्यते परः
पुष्पं वा यदि वा पत्रं यत्पादयुगले जलम् । दत्त्वा तरति संसारं रुद्रोऽसौ दृश्यते किल
तत्सन्निधाने सकलं नियच्छति सनातनः ।
कालं किल स योगात्मा कालकालो हि दृश्यते ॥ ४३ ॥
जीवनं सर्वलोकानां त्रिलोकस्यैव भूषणम् । सोमः स दृश्यते देवः सोमो यस्य विभूषणम्
देव्या सह सदा साक्षाद्यस्य योगः स्वभावतः । गीयते परमा मुक्तिर्महादेवः स दृश्यते
योगिनो योगतत्त्वज्ञा वियोगाभिमुखोऽनिशम् ।
योगं ध्यायन्ति देव्यासौ स योगी दृश्यते किल ॥ ४६ ॥
सोऽनुवीक्ष्य महादेवं महादेव्या सनातनम् । वरासने समासीनमवाप परमां स्मृतिम्
लब्ध्वा माहेश्वरीं दिव्यां संस्मृतिं भगवानजः । तोषयामास वरदं सोमं सोमार्द्धभूषणम्

ब्रह्मोवाच

नमो देवाय महते महादेव्यै नमो नमः । नमः शिवाय शान्ताय शिवायै सततं नमः
ओं नमो ब्रह्मणे तुभ्यं विद्यायै ते नमो नमः । महेशाय नमस्तुभ्यं मूलप्रकृतये नमः ॥
नमो विज्ञानदेहाय चिन्तायै ते नमो नमः । नमोऽस्तु कालकालाय ईश्वरायै नमो नमः
नमो नमोऽस्तु रुद्राय रुद्राण्यै ते नमो नमः । नमो नमस्ते कालाय मायायै ते नमो नमः
नियन्त्रे सर्वकार्याणां क्षोभिकायै नमो नमः । नमोऽस्तु ते प्रकृतये नमो नारायणाय च

योगदाय नमस्तुभ्यं योगिनां गुरवे नमः । नमः संसारनाशाय संसारोत्पत्तये नमः
नित्यानन्दाय विभवे नमोऽस्त्वानन्दमूर्त्तये । नमः कार्यविहीनाय विश्वप्रकृतये नमः
ओंकारमूर्त्तये तुभ्यं तदन्तः संस्थिताय च । नमस्ते व्योमसंस्थाय व्योमशक्त्यै नमो नमः
इति सोमाष्टकेनेशं प्रणिपत्य पितामहः । पपात दण्डवद्भूमौ गृणन्वै शतरुद्रियम्

अथ देवो महादेवः प्रणतार्त्तिहरो हरः ।
प्रोवाचोत्थाप्य हस्ताभ्यां प्रीतोऽस्मि तव साम्प्रतम् ॥ ५८ ॥

दत्वास्मै परमं योगमैश्वर्यमतुलं महत् । प्रोवाचाग्रे स्थितं रुद्रं नीललोहितमीश्वरम्
एष ब्रह्मास्य जगतः सम्पूज्यः प्रथमः स्थितः । आत्मना रक्षणीयस्ते गुरुर्ज्येष्ठः पिता तव
अयं पुराणपुरुषो न हन्तव्यस्त्वयाऽनघ । स योगैश्वर्यमाहात्म्यान्मामेव शरणं गतः
अयं च यज्ञो भगवान् सगर्वो भवताऽनघ । शासितव्यो विरिञ्चस्य धारणीयं शिरस्त्वया
ब्रह्महत्यापनोदार्थं व्रतं लोके प्रदर्शयन् । चरस्व सततं भिक्षां संस्थापय सुरद्विजान्

इत्येतदुक्त्वा वचनं भगवान् परमेश्वरम् ।
स्थानं स्वाभाविकं दिव्यं ययौ तत्परमं पदम् ॥ ६४ ॥

ततः स भगवानीशः कपर्द्दी नीललोहितः । ग्राहयामास वदनं ब्रह्मणः कालभैरवम्
चरस्व पापनाशार्थं व्रतं लोकहितावहम् । कपालहस्तो भगवान् भिक्षां गृह्णातु सर्वतः

उक्त्वैवं प्राहिणोत्कन्यां ब्रह्महत्येति विश्रुताम् ।
दंष्ट्राकरालवदनां ज्वालामालाविभूषणाम् ॥ ६७ ॥

यावद्वाराणसीं दिव्यां पुरीमेष गमिष्यति । तावद्विभीषणाकारा ह्यनुगच्छ त्रिशूलिनम्
एवमाभाष्य कालाग्निं प्राह लोकमहेश्वरम् । अटस्व लोकानखिलान्भिक्षार्थी मन्नियोगतः
यदा द्रक्ष्यसि देवेशं नारायणमनामयम् । तदासौ वक्ष्यति स्पष्टमुपायं पापशोधनम्
स देवदेवतावाक्यमाकर्ण्य भगवान् हरः । कपालपाणिर्विश्वात्मा चचार भुवनत्रयम्
आस्थाय विकृतं वेषं दीप्यमानं स्वतेजसा । श्रीमत्पवित्रं रुचिरं लोचनत्रयसंयुतम्
सहस्रसूर्यप्रतिमैः सिद्धैः प्रमथपुङ्गवैः । भाति कालाग्निनयनो महादेवः समावृतः ॥
पीत्वा तदमृतं दिव्यमानन्दं परमेष्ठिनः । लीलाविलासबहुलो लोकानागच्छतीश्वरः

तं दृष्ट्वा कालवदनं शङ्करं कालभैरवम् । रूपलावण्यसम्पन्नं नारीकुलमगादनु ॥७५॥
गायन्ति गीतैर्विविधैर्नृत्यन्ति पुरतः प्रभोः । सस्मितं प्रेक्ष्यवदनञ्चक्रुर्भ्रूभङ्गमेव च

स देवदानवादीनां देशानभ्येत्य शूलधृक् ।
जगाम विष्णोर्भुवनं यत्राऽऽस्ते पुरुषोत्तमः ॥ ७७ ॥

सम्प्राप्य दिव्यभवनं शङ्करो लोकशङ्करः । सहैव भूतप्रवरैः प्रवेष्टुमुपचक्रमे ॥७८॥
अविज्ञाय परं भावं दिव्यं तत्पारमेश्वरम् । न्यवारयत्त्रिशूलाङ्कं द्वारपालो महाबलः
शङ्खचक्रगदापाणिः पीतवासामहाभुजः । विष्वक्सेनइतिख्यातोविष्णोरंशसमुद्भवः
( अथ त शङ्करगणं युयुधेविष्णुसम्भवः । भीषणो भैरवादेशात्कालवेगइतिस्मृतः)
विजित्य तं कालवेगं क्रोधसंरक्तलोचनः । दुद्रावाभिमुखं रुद्रं चिक्षेप च सुदर्शनम्
अथ देवो महादेवस्त्रिपुरारिस्त्रिशूलभृत् । तमापतन्तं सावज्ञमालोकयदमित्रजित्
तदन्तरे महद्भूतं युगान्तदहनोपमम् । शूलेनोरसिनिर्भिद्य पातयामास तं भुवि ॥

स शूलाभिहतोऽत्यर्थं त्यक्त्वा स्वम्परमं बलम् ।
तत्याज जीवितं दृष्ट्वा मृत्युं व्याधिहता इव ॥ ८४ ॥

निहत्य विष्णुपुरुषं सार्द्धं प्रमथपुङ्गवैः । विवेश चान्तरगृहं समादाय कलेवरम् ॥
वीक्ष्यतं जगतो हेतुमीश्वरं भगवान्हरिः । शिरांललाटात्सम्भिद्यरक्तधारामपातयत्
गृहाणभिक्षां भगवन् !मदीयाममितद्युते !। न विद्यतेऽन्या ह्युचिता तव त्रिपुरमर्द्दन!
न सम्पूर्णं कपालं तद्ब्रह्मणः परमेष्ठिनः । दिव्यं वर्षसहस्रन्तु सा च धारा प्रवाहिता
अथाब्रवीत्कालरुद्रं हरिर्नारायणः प्रभुः । संस्तूय विविधैर्भावैर्बहुमानपुरःसरम् ॥
किमर्थमेतद्वदनं ब्रह्मणो भवता धृतम् । प्रोवाच वृत्तमखिलं देवदेवो महेश्वरः ॥६०॥
समाहूय हृषीकेशोब्रह्महत्यामथाच्युतः । प्रार्थयामास भगवान्विमुञ्चेतित्रिशूलिनम्

न तत्याजाऽथ सा पार्श्वं व्याहृताऽपि मुरारिणा ।
चिरं ध्यात्वा जगद्योनिं शङ्करं प्राह सर्ववित् ॥ ६२ ॥

व्रजत्वदिव्यां भगवन्पुरींवाराणसीं शुभाम् । यत्राखिलजगद्दोषात्क्षिप्रन्नाशयतीश्वरः
ततः सर्वाणिभूतानितीर्थान्यायतनानिच । जगामलीलयादेवोलोकानांहितकाम्यया

संनृत्यमानः प्रमथैर्महायोगैरितस्ततः । नृत्यमानो महायोगी हस्तन्यस्तकलेवरः
तमभ्यधावद्भगवान्हरिर्नारायणः प्रभुः । समास्थाय परं रूपं नृत्यदर्शनलालसः ॥

निरीक्षमाणो गोविन्दं वृषेन्द्राङ्कितशासनः ।
सस्मितोऽनन्तयोगात्मा नृत्यति स्म पुनः पुनः ॥ ९७ ॥

अथ सानुचरो रुद्रः स हरिर्धर्मवाहनः । भेजे महादेवपुरीं वाराणसीति विश्रुताम् ॥
प्रविष्टमात्रे विश्वेशे ब्रह्महत्या कपर्दिनि । हाहेत्युक्त्वा सनादं वै पातालं प्रापदुःखिता
प्रविश्य परमं स्थानं कपालं ब्रह्मणो हरः । गणानामग्रतो देवः स्थापयामास शङ्करः

स्थापयित्वा महादेवो ददौ तच्च कलेवरम् ।
उक्त्वा सजीवमस्त्विति विष्णवेऽसौ घृणानिधिः ॥ १०१ ॥

ये स्मरन्ति ममाजस्रं कापालं वेषमुत्तमम् । तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम्
आगम्य तीर्थप्रवरे स्नानं कृत्वा विधानतः । तर्पयित्वा पितॄन्देवान्मुच्यते ब्रह्महत्यया
अशाश्वतं जगज्ज्ञात्वा प्रसज्य परमां पुरीम् । देहान्ते तत्परं ज्ञानं ददाति परमं पदम्
इत्येवमुक्त्वा भगवान् समालिङ्ग्य जनार्दनम् । सहैव प्रमथेशानैः क्षणादन्तरधीयत

स लब्ध्वा भगवान्कृष्णो विष्वक्सेनं त्रिशूलिनः ।
स्वं देशमगमत्तूर्णं गृहीत्वा परमं वपुः ॥ १०९ ॥

एतद्वः कथितं पुण्यं महापातकनाशनम् । कपालमोचनं तीर्थं स्थाणोः प्रियकरं शुभम्
य इमं पठतेऽध्यायं ब्राह्मणानां समीपतः । मानसैर्वाचिकैः पापैः कायिकैश्च प्रमुच्यते

इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु कपालमोचनमाहात्म्यं
नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः

### प्रायश्चित्तप्रकरणवर्णनम्

व्यास उवाच

सुरापस्तु सुरांतप्तामग्निवर्णांम्पिबेत्तदा । निर्दग्धकायःस तयामुच्यते च द्विजोत्तमः
गोमूत्रमग्निवर्णं वा गोशकृद्रसमेव वा । पयो घृतं जलं वाथ मुच्यते पातकात्ततः
जलार्द्रवासाः प्रयतो ध्यात्वानारायणं हरिम् । ब्रह्महत्याव्रतञ्चाथ चरेत्पापप्रशान्तये

सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु ।
स्वकर्म ख्यापयन्ब्रूयान्माम्भवाननुशास्त्विति ॥ ४ ॥

गृहीत्वामुसलं राजासकृद्धन्यात्तुतंस्वयम् । वधेतुशुद्ध्यतेऽस्तेनो ब्राह्मणस्तपसाथवा
स्कन्धेनादायमुसलंलगुडंचापिखादिरम् । शक्तिञ्चादायतीक्ष्णाग्रामायसंदण्डमेववा
राजातेनचगन्तव्यो मुक्तकेशेनधावता । आचक्षाणेनतत्पापमेतत्कर्म्मास्मिशाधिमाम्

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ।
अशासित्वा तु तं राजा स्तेनस्याऽऽप्नोति किल्बिषम् ॥ ८ ॥
तपसापनोत्तुमिच्छंस्तु सुवर्णस्तेयजं मलम् ।
चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महणो व्रतम् ॥ ६ ॥

त्वाश्वमेधावृथेपूतःस्याद्थवाद्विजः । प्रदद्याद्वाथविप्रेभ्यःस्वात्मतुल्यंहिरण्यकम्
रेद्वा वत्सरं कृच्छ्रं ब्रह्मचर्यपरायणः । ब्राह्मणः स्वर्णहारी तु तत्पापस्यापनुत्तये

गुरोर्भार्य्यां समारुह्य ब्राह्मणः काममोहितः ।
अवगूहेत्स्त्रियं तप्तां दीप्तां कार्ष्णायसीं कृताम् ॥ १२ ॥
स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
अभिगच्छेद्दक्षिणाशामानिपातादजिह्मगः ॥ १३ ॥
गुर्वङ्गनागमः शुद्ध्यै चरेद् ब्रह्महणो व्रतम् ।

शाखा वा कण्टकोपेतां परित्यज्याथ वत्सरम् ॥ १४ ॥

अथ शर्वात नियतोमुच्यते गुरुतल्पगः । कृच्छ्रं चान्द्रश्चरेद्विप्रश्चीरवासा समाहित

अश्वमेधावभृथके स्नात्वा वा शुद्ध्यते द्विज । कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदाव्रती

स्थानासनाभ्यां विहरंस्त्रिरह्नोऽभ्युपयन्नपः ।

अध शायी त्रिभिर्वर्षैस्तद्व्यपोहति पातकम् ॥ १७ ॥

चान्द्रायणानि वा कुर्यात्पञ्च चत्वारि वा पुनः ।

पतितैः सम्प्रयुक्तानामथ वक्ष्यामि निष्कृतिम् ॥ १८ ॥

पतितेन तु संसर्गं यो येन कुरुते द्विज । स तत्पापापनोदार्थं तस्यैव व्रतमाचरेत्

तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रित । षाण्मासिके तु संसर्गे प्रायश्चित्तार्धमाचरेत्

एभिर्व्रतैरपोहन्ति महापातकिनो मलम् ।

पुण्यतीर्थाभिगमनात्पृथिव्यां वाथ निष्कृति ॥ २१ ॥ ।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमम् । कृत्वाऽप्येतानि सर्वाणि ब्राह्मणः कामचारत

कुर्यादनशनं विप्र पुण्यतीर्थे समाहित ।

ज्वलन्तं वा विशेदग्निं ध्यात्वा देवं कपर्दिनम् ॥ २३ ॥

न ह्यन्या निष्कृतिर्दृष्टा मुनिभिर्धर्मवादिभि

तस्मात्पुण्येषु तीर्थेषु दहन्वापि स्वदेहकम् ॥ २४ ॥

इति श्रीकूर्ममहापुराणे उत्तरार्द्धे व्यासगीतासु प्रायश्चित्तवर्णनं नाम त्रिंशोऽध्यायः

# त्रयस्त्रिंशोऽध्यायः

## प्रायश्चित्तकथनम्

व्यास उवाच

गत्वा दुहितरं विप्रः स्वसारं वा स्नुषामपि ।
प्रविशेज्ज्वलनं दीप्तं मतिपूर्वमिति स्थितिः ॥ १ ॥
मातृष्वसां मातुलानीं तथैव च पितृष्वसाम् ।
भागिनेयीं समारुह्य कुर्यात्कृच्छ्रातिकृच्छ्रकौ ॥ २ ॥

चान्द्रायणञ्च कुर्वीततस्यपापस्य शान्तये । ध्यायन्देवं जगद्योनिमनादिनिधनं हरिम्
भ्रातृभार्य्यां समारुह्यकुर्यात्तत्पापशान्तये । चन्द्रायणानिचत्वारि पञ्चवासुसमाहितः
पितृष्वस्रेयींगत्वातुस्वस्रीयांमातुरेवच । मातुलस्यसुतांवापिगत्वाचान्द्रायणञ्चरेत्

सखिभार्य्यां समारुह्य गत्वा श्यालीं तथैव च ।
अहोरात्रोषितो भूत्वा ततः कृच्छ्रं समाचरेत् ॥ ६ ॥

उदक्या गमने विप्रस्त्रिरात्रेण विशुध्यति । चाण्डालीगमने चैव ततकृच्छ्रत्रयं विदुः
शुद्धिःसान्तपनेनस्यान्नान्यथानिष्कृतिःस्मृता । मातृगोत्रांसमारुह्यसमानप्रवरांतथा
चान्द्रायणेन शुध्येत प्रयतात्मासमाहितः । ब्राह्मणोब्राह्मणींगत्वा कृच्छ्रमेकंसमाचरेत्
कन्यकां दूषयित्वा तु चरेच्चान्द्रायणव्रतम् । अमानुषीषु पुरुष उदक्यायामयोनिषु
रेतःसिक्त्वाजलेचैवकृच्छ्रंसान्तपनञ्चरेत् । वार्द्धिकीगमने विप्रस्त्रिरात्रेणविशुद्ध्यति
गवि मैथुनमासेव्य चरेच्चान्द्रायणव्रतम् । वेश्यायांमैथुनं कृत्वाप्राजापत्यंचरेद्द्विजः

पतिताञ्च स्त्रियं गत्वा त्रिभिः कृच्छ्रैर्विशुद्ध्यति ।
पुल्कसीगमने चैव कृच्छ्रञ्चान्द्रायणञ्चरेत् ॥ १३ ॥

नटींशैलूषकीञ्चैवरजकींवेणुजीविनीम् । गत्वाचान्द्रायणंकुर्यात्तथा चर्मोपजीविनीम्
ब्रह्मचारी स्त्रियंगच्छेत्कथञ्चित्काममोहितः । सप्तागारञ्चरेद्भैक्षंवसित्वा गर्दभाजिनम्

उपस्पृशेत्त्रिषवणं स्वपापपरिकीर्त्तयन् । सम्वत्सरेणचैकेन तस्मात्पापात्प्रमुच्यते
ब्रह्महत्यामतश्चापि षण्मासान्निचरन्यमी । मुच्यते ह्यवकीर्णोऽपि ब्राह्मणानुमते स्थित
सप्तरात्रमकृत्वा तु भैक्षचर्याग्निपूजनम् । रेतसश्च समुत्सर्गे प्रायश्चित्तं समाचरेत् ।

ओङ्कारपूर्विकाभिस्तु महाव्याहृतिभिः सदा ।
सम्वत्सरन्तु भुञ्जानो नक्तम्भिक्षाशन शुचि ॥ १६ ॥

सावित्रीञ्च जपेन्नित्यं सम्यक् क्रोधवर्जित । नदीतीरेषुतीर्थेषु तस्मात्पापाद्विमुच्यते
हत्वातु क्षत्रियं विप्रः कुर्याद्ब्रह्महणो व्रतम् । अकामतो वै षण्मासान्दद्यात्पञ्चशतं गवाम्
अब्दं चरेद्वा नियतो वनवासी समाहित । प्राजापत्यं सान्तपनं तप्तकृच्छ्रन्तु वा स्वयम्
प्रमादात्कामतो वैश्यं कुर्यात्सम्वत्सरत्रयम् । गोसहस्रन्तु पादन्तु दद्याद्ब्रह्महणो व्रतम्

कृच्छ्रातिकृच्छ्रौ वा कुर्याच्चान्द्रायणमथापि वा ।
सम्वत्सरं व्रतं कुर्याच्छूद्रं हत्वा प्रमादत ॥ २४ ॥

गोसहस्रार्धपादञ्च दद्यात्तत्पापशान्तये । अष्टौ वर्षाणि वा त्रीणि कुर्याद्ब्रह्महणो व्रतम्

हत्वा तु क्षत्रियं वैश्यं शूद्रञ्चैव यथाक्रमम् ॥ २५ ॥

निहत्य ब्राह्मणीं विप्रस्त्वष्टवर्षं व्रतञ्चरेत् । राजन्यां वर्षषट्कन्तु वैश्यां सम्वत्सरत्रयम्

वत्सरेण विशुद्ध्येत शूद्रीं हत्वा द्विजोत्तम ।
वैश्यां हत्वा द्विजातिस्तु किञ्चिद्दद्याद् द्विजातये ॥ २७ ॥

अन्त्यजानां वधे चैव कुर्याच्चान्द्रायणं व्रतम् । पराकेणाथवा शुद्धिरित्याह भगवानज
मण्डूकं नकुलं काकं विडालं खरमूषकौ । श्वानं हत्वा द्विजः कुर्यात्षोडशांशं महाव्रतम्
पयः पिबेत्त्रिरात्रन्तु श्वानं हत्वा ह्ययन्त्रित । मार्जारं वाथ नकुलं योजनञ्चाध्वनो व्रजेत्
कृच्छ्रं द्वादशरात्रन्तु कुर्यादश्ववधे द्विज । अर्च्चां कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तम
पलालभारकं षण्ढे सीसकञ्चैकमाषकम् । घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरे
शुकं द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् । हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च

वानरं श्येनभासञ्च स्पर्शयेद् ब्राह्मणाय गाम् ।
क्रव्यादांस्तु मृगान्हत्वा धेनुं दद्यात्पयस्विनीम् ॥ ३४ ॥

